श्रीमद्-विश्वनाथसिंहजूदेवविरचितं

# श्री राधावल्लभीयमतप्रकाशकं
# ब्रह्मसूत्र-भाष्यम्


सम्पादकः

त्रिपाठी मिथिलाप्रसादः



राष्ट्रियसंस्कृतसंस्थानम्

मानितविश्वविद्यालयः

नवदेहली

# भूमिका

उपनिषद्-ब्रह्मसूत्र-श्रीमद्भगवद्गीतानां त्रयी परम्परायां प्रस्थानत्रयीति व्यपदिष्टा। प्रस्थानत्रय्याः भाष्यपरम्परा यावती विपुला तावती गहना, यावती पुरातनी तावती चिरनवीना। अनयैव भाष्यपरम्परया दर्शनस्य ते ते सम्प्रदाया समुन्मेषं च विकासं प्राप्तवन्तः। तत्रापि ब्रह्मसूत्रस्य भाष्यपरम्परा सविशेषं प्रथते। सैव अद्वैत-द्वैत-द्वैताद्वैत-विशिष्टाद्वैत शुद्धाद्वैत प्रभृतिवेदान्तानां प्रवर्तनं कृतवती। इयं च भाष्यपरम्परायाः सनातनी सरिदद्यापि प्रवहमाणा आस्ते। अस्यां परम्परायां श्रीमन्नरेशविश्वनाथसिंहजूदेवप्रणीतं राधावल्ल-भीयमतप्रकाशकं ब्रह्मसूत्रभाष्यं नव्यतमम्। रीवानरेशः श्रीमान् विश्वनाथसिंहजूदेववर्यः स्वकृतित्वेन संस्कृतसाहित्ये सुप्रथितः। अयं पाण्डित्यपरम्परायाः पोषकः कवीनामाश्रयदाता स्वयं च ललितगद्यपद्यबन्धकर्ता दार्शनिकश्च। रामोपासकोऽयं महाराजो गीतगोविन्दतुल्यं रागकाव्यं रामचन्द्रिकाह्निकं नाम व्यरचयत्। सङ्गीतरघुनन्दनं नाम दशसर्गात्मकं गीतगोविन्दपरम्परानुसारि काव्यं क्वचिदेतस्य क्वचिच्चैतदाश्रितस्य कवेः प्रियादासस्य कृतिरित्युल्लिख्यते। अस्यैव राधावल्लभीयमतप्रकाशकं ब्रह्मसूत्रभाष्यं अद्यावध्यप्रकाशितं श्रीमतां मिथिलाप्रसादत्रिपाठिनां सदुद्यमेन समुद्धृतं तैरेव सम्पादितमत्र प्रस्तूयते। असमग्रोऽप्ययं ग्रन्थः समग्रयिष्यति वेदान्तभाष्यविचारपरम्परामिति विश्वसिमः।

विश्वनाथसिंहजूदेवो राममेव परमतत्त्वं मनुते। एतच्च परमतत्त्वं सगुणं च निर्गुणं च साकारं च निराकारं चातिक्रम्य अवस्थितम्। एतद्धि रामतत्त्वं विश्वनाथसिंहजूदेवमतेन वाङ्मनोगोचरातीतं केवलं प्रेम्णैव प्राप्यम्। वस्तुतोऽत्र गौडीयभक्तसम्प्रदायो रामभक्तिपरकतया विनिवेशितः। महांश्चास्य ग्रन्थकर्तुरादरो दरीदृश्यते कृष्णभक्तिसम्प्रदायं चैतन्यस्य महाप्रभुं च प्रति। तथापि सर्वेषां भक्तिसम्प्रदायानां दर्शनपरम्पराणां च रामरूपपरमतत्त्वपरां

व्याख्यां विदधताऽनेन प्रकटीकृतः कश्चनपाण्डित्यप्रकर्षः। तथाहि– अयं सप्रमाणमुद्धरति वराहवामनादिपुराण–सदाशिवसंहिता–भुशुण्डिरामायणरामायणीय जानकीस्तव–कृष्णोपनिषद्रामतापनीयोपनिषत्प्रभृतिग्रन्थान्। सीताराधयोः रामकृष्णयोरभेदमयं प्रतिपादयति। माध्व–निम्बार्क–प्रभृतीनां दर्शनानि अनेन पुनरुन्मीलितानि। रामस्य परात्परत्वं प्रतिपादयन्नपि विश्वनाथसिंहजूदेवस्तत्र जयदेवस्य चैतन्यस्य च माधुर्यं भक्तिभावं च समावेशयतीत्यत्र विशेषः। ग्रन्थेनानेन भरतीयचिन्तनपरम्पराणां विलुप्तसोपानसरणीनां पुनराविष्कार–क्रमोऽग्रेसारितः स्यादिति मन्यामहे, वर्धापयामश्च साधुवादैरेतद्ग्रन्थोद्धारकर्तृ–श्रीमिथिलाप्रसादत्रिपाठिनः।

**राधावल्लभः त्रिपाठी,**
कुलपतिः
राष्ट्रियसंस्कृतसंस्थानम्।

# Introduction

Upaniṣads, Brahmasūtra and Śrīmadbhagavadgītā - these are said to have formed the Prasthānatrayī in the tradition of Indian Philosophy. We have a long tradition of hermaneutics focusing the Prasthānatrayī. Various systems of Indian philosophy specially the schools of Vēdānta sprang and devoloped from this hermaneutics. The history of Bhāṣyas on Brahmasūtra of Bādarāyaṇa Vyāsa is well known. Multifarious schools of Vēdānta - Advaita, Dvaita, Dvaitādvaita, Viśiṣṭādvaita, Śuddhādvaita and others developed from this hermaneutics. The tradition of Bhāṣyas on Brahmasūtra still continues. The latest to join the great line of Bhāṣyakāras is perhaps Viśvanāthasiṃhajūdēva, King of Rewa state (formerly in Bhaghelakhanda, now in Madhya Pradesh). Who composed Rādhāvallabhīyamataprakāśaka Brahmasūtrabhāṣya. Viśvanāthasiṃhajūdēva is a well known figure in the history of Sanskrit literature as a patron of poets as well as a philosopher and himself a poet. He composed Rāmacandrikāhnikam, a Rāgakāvya in the line of Jayadeva's Gitagōvinda. Another work, Saṅgītaraghunandanam, in ten cantos, again an imitaion of Jayadeva's Gitagōvinda, is also attributed to him.

Viśvanāthasiṃhajūdēva was an ardent devotee of Śrīrāma, and the cult of Rāmōpāsanā and Rāmabhakti that developed during his rule in Rewa held Rāma as the Ultimate, transcending the categories of Saguṇa and Nirguṇa or Sākāra and Nirākara, and remaining beyond speech, mind and sense organs. This Ultimate Rāma can be realised only by Love.

In fact, Viśvanāthasiṃhajūdēva has reapropriated the tenets of Gauḍīya Bhaktisampradāya in accordance with his

faith in Rāma. He has high regards for Kṛṣṇa cult, and Caitanya's school. A profound scholar of philosophical schools, he profusely quotes texts like Varāha and Vāmana Purāṇas, Sadāśivasaṃhitā, Bhuśuṇḍirāmāyaṇa, Rāmāyaṇīya Jānakīstava, Kṛṣṇōpaniṣad Rāmatāpanīyōpaniṣad etc. He establishes identity between Sītā and Rādhā on one hand and between Rāma and Kṛṣṇa on the other. He also re-inteprates the sytems of Mādhva, Nimbāraka and other. The uniqueness of his Bhaṣya lies in the assimilation of Mādhuryabhakti in the faith for Rāma.

Prof. Mithila Prasad Tripathi, Director of Kalidasa Akademi, Ujjain deserves credit for having discovered the rare manuscript of Rādhāvallabhīyamataprakāśaka Brahmasūtrabhāṣya by Viśvanāthasiṃhajūdēva and having taken pains to prepare a presscopy of his valuable treatise. Eventhough this new Bhāṣya on the Brahmasūtra by Viśvanāthasiṃhajūdēva is imcomplete, we beleive that it will further stimulate investigations in the area of Vēdānta.

**Radhavallabh Tripathi**

Vice-Chancellor,

Rashtriya Sanskrit Sansthan

# सम्पादकीयम्

भारतीयं वाङ्मयं साकल्येन ज्ञानविज्ञानमयमेव प्रथितमिह परत्रापि देशे। प्राक्तनो वाक्समुल्लासो वेदाभिधानेन परिचीयते। श्रुतिपरम्परया वाचिकरीत्या वा शिष्यपरम्परासु क्रमप्राप्तं ज्ञानतत्त्वमत्र समञ्चितमासीत्। तद् ज्ञानं सविज्ञानमपि यथाकथञ्चित् संकलय्याद्यानामृषीणां गौरवस्मारणं कारयितुं वेदाः प्रवर्तन्ते साम्प्रतमस्माकं दिग्दर्शनार्थम्। वैदिकसंहितासु सन्निहितं तत्त्वबोधकौशलमेव वेदान्तनाम्ना समुपबृंहितमुपनिषत्सु। वेदान्तो नामोपनि-षत्प्रमाणमिति वचनमवगमयति तत्त्वमिदमेव। सर्वत्र सम्यक् व्यापृतमुपबृंहितं वा तत्त्वमस्माभिर्भारतीयैरुच्यते ब्रह्मपदेन। संप्राप्तमौपनिषदं बोधं सूत्रयामास बादरायणः चतुर्षु अध्यायेषु षोडशपादेषु यद्वा त्रिपञ्चाशदुत्तरपञ्चशतमितेषु सूत्रेषु। पादक्रमेण सूत्राणि तानि ३१, ३२, ४३, २६ (प्रथमे); ३९, ४५, ५३, २२ (द्वितीये); २७, ४१, ६५, ५२ (तृतीये); १९, २१, १६, २२ (चतुर्थे); संख्याभिरवस्थितानि सन्ति।

भारतीया मनीषा मोक्षपरा भक्तिपरा वा वरीवर्ति। विविध-सम्प्रदायाचार्याः प्रस्थानत्रयीभाष्यं विधायैव स्वमतपोषणं प्रदर्शनं वा कर्तुमुद्युक्ताः सदाऽऽसन्। अद्वैतवेदान्तमतप्रवर्तकाचार्यवर्य्याः भगवत्पादाः स्वामिशङ्कराचार्याः बादरायणं ब्रह्मसूत्रं स्वभाष्येणालञ्चक्रुः। प्रथम एषः क्रमः। ततः प्रवर्तितक्रमेषु श्रीरामानुजाचार्य–श्रीवल्लभाचार्यादीनां भाष्यसरणिर्विदुषां बोधविलास-तरङ्गैराप्लावयितुमशेषं वाङ्मयं प्रस्तौति निभृतमेव।

भाष्यपरम्परायामस्यां राधावल्लभीयमतप्रकाशकं भाष्यं महाराज-श्रीविश्वनाथसिंहजूदेवेन रीवानरेशेण कृतम्। वैष्णवानां तोषाय कृतमिदं भाष्यम् तद्यथा पुष्पिकायां "इति श्रीमद्भगवदवतारवेदार्थनिर्णायक–श्रीमद्वे-दवेदान्ताचार्य-श्रीमद्वेदव्यासकृतवेदान्तसूत्राणां सिद्धिश्रीमहाराजाधिराज-श्रीमहाराज-श्रीराजाबहादुर-श्रीसीतारामचन्द्रकृपापात्राधिकारि–विश्वनाथसिंह-जूदेवकृते श्रीराधावल्लभीयमतप्रवर्तकभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः।।"

विश्वनाथासिंहस्य जन्म १७८९ ख्रीष्टाब्दे मरणम् च १८५४ ईसवीये वर्षे समभवत्। १८४० ख्रीष्टाब्दे वैशाखशुक्लपक्षे पञ्चम्यामारभ्य १९४१ ख्रीष्टाब्दे माघकृष्णपञ्चम्यां समापितं विश्वनाथसिंहेन भाष्यमिदम्। तद्यथा–

**अब्दे सप्तनवाष्टेन्दावविरोधिन्यवर्जिते।**
**वैशाखशुक्लपञ्चम्यां भाष्यमारम्भणं कृतम्।**
**माघस्य कृष्णपञ्चम्यां पूर्णतां समगादिदम्॥**

यद्यपीदं भाष्यं साद्यन्तं रीवानरेशस्य ग्रन्थालये समुपलभ्यते परन्तु मुहुर्मुहुः प्रयासेनापि ग्रन्थोऽसौ मया न प्राप्तः। स्व० राजीवलोचनाग्निहोत्रिमहोदयानां ग्रन्थालये भाष्यग्रन्थोऽयं त्रिंशद्वर्षपूर्वं मयाऽधिगतः। एकस्यामेव रात्रौ ग्रन्थस्यास्य प्रतिलिपिर्मया कृता परन्तु तस्यां प्रतौ पृष्ठचतुष्टयस्यानुपलब्धत्वादत्रापि न तेषां प्राप्तिः। प्रथमाध्यायमात्रस्य चतुर्णां पादानां भाष्यमिदं मम सविधे बहुकालाद् प्रकाशनाय प्रतीक्षायामासीत्। वार्ताप्रसङ्गे संस्थानस्य प्रकाशनविभागस्य पं. प्रकाशपाण्डेयमहोदयाः पाण्डुलिपिप्रेषणाय मामुक्तवन्तः। नचिरादेव राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिवर्य्याणां प्रो. राधावल्लभत्रिपाठिनां सौकर्येण प्राकाश्यतामेति भाष्यरत्नमिदम्प्रथमतयैव। प्रयासस्य नैरन्तर्यं इदानीमपि जागर्ति यावदन्याध्यायानां भाष्यप्राप्तिः स्यात् तावदनेनैव प्रीणातु रसेश्वरः श्रीरामचन्द्रः। ग्रन्थे प्राप्ते सति सम्पूर्णंभाष्यमपि प्राकाश्यतामेष्यतीति मे विश्रम्भः। साम्प्रतं गरलीपरिसरेऽलङ्कुर्वतां प्राचार्यपदं श्रीमतां प्रकाशपाण्डेयानां कृते धन्यवादाञ्जलिर्विलसतात्। कुलपतिमहोदयास्तथैवाभिनन्दनानुभावेन कार्तज्ञावलिभिरलङ्करणीयाः सन्ति।

यत्र कुत्रापि स्खलनं प्राप्स्यते समाधातुं प्रार्थयति सम्पादकः विज्ञान्।

उज्जयिनी<br>३१.०८.२००९

विदुषामाश्रवः<br>**त्रिपाठी मिथिलाप्रसादः**

# श्री राधावल्लभीयमत प्रकाशकं

# ब्रह्मसूत्र-भाष्यम्

### प्रथमः पादः

अध्याय-१ पाद-१ सूत्र-१

मूल–
नित्यानुरागसिन्धूत्थरसचन्द्रस्फुरत्प्रमाम्।
श्रीभूर्लीलादिभिः स्तुत्यां स्तौमि श्रीरामवल्लभाम् ॥१॥

जीवा लीना यदीयालयमहसि परब्रह्मणि स्वं परं चा-
जानन्तः संसरन्ति त्रिजगति सततं मायया क्लिश्यमानाः।
मुच्यन्ते यत्कृपातः स्फुरति परतरे नाम्नि विज्ञाय तत्वं
स श्रीरामोऽवतान्नः परमपरतरः प्रेयसीभावगम्यः॥२॥

वाङ्मनोगोचरातीतं हरेर्नामादिचिन्तकः।
निवारयतु विघ्नौघान् हनूमान् राम-विग्रहः॥३॥

यन्मन्त्राकलनस्फुरत्परतरप्रेम्णा स्वकीयं तनुं
दत्वाविर्भवति स्वयं रघुपतिर्वाचोऽपि दूरे स्थितः।
गोपीभिर्ललितादिभिः परिवृतां गोविन्दमोदप्रदां
तां लक्ष्मीं मदनस्वबीजसहितां राधां नमस्याम्यहम्॥४॥

साकेतात्सकलर्तुकान्तिललिते वृन्दावने पश्चिमे,
क्रीडन्तं श्रुतिलोलकुण्डलधरं पीताम्बरं सुन्दरम्।
रासोल्लासलसत्तनुं व्रजवधूः सम्मोहयन्तं मुहुः,
राधावल्लभमाश्रये मुरलिकामापूरयन्तं मुदा॥५॥

विद्याऽविद्यास्वरूपेण मोक्षबन्धप्रदायिनीम्।
हंसस्थितां स्मितमुखीं वन्दे वाचामधीश्वरीम्॥६॥

ध्यायंश्चित्ते राममन्त्रं तदीयव्याख्यावेदान् वोधयन्नङ्गजातान्।
व्याख्यामुद्रां सन्दधानोऽम्बुजस्थो वेधाःश्रेणीः श्रेयसामातनोतु॥७॥

योऽबोधयन्मां गिरिजार्द्धदेहः स्वप्ने षडर्णं निशि राममन्त्रम्।
स सोमनाथो जयतात् परेशः सदाशिवो देवसरोवरस्थः॥८॥

प्रत्यूहव्यूहकदलीकाण्डखण्डनपण्डितम्।
वक्रतुण्डमहं वन्दे शुण्डामण्डलमण्डितम्॥९॥

कृत्वा पुराणानि विभज्य वेदान् यः सूत्रयामास तदीयमर्थम्।
सन्देहनाशाय गुरुं मुनीनां तं व्यासमाद्यं पुरुषं नतोऽस्मि॥१०॥

प्रियादासाचार्यं निगमपदवार्य्यंचितमन
स्तडागं वन्द्यांगं प्रसरदनुरागं रघुवरे।
मुनीनां तत्तद्वाक् सरिदमृतसम्भेदकरणं
सदानन्दं वन्दे स्वजनभयसन्देहहरणम्॥११॥

श्रीकृष्णास्यसुधाकरार्णवसुधास्वादोल्लसल्लालसो
वंशीरूपधरो हरोऽतिविरसाज्ञानाग्निनालिङ्गितम्।
दृष्ट्वा जीवमजीवयत्परतरप्रेमामृतैः श्रीपते-
स्तं वृन्दावनगं नमामि हरिवंशाख्यं गुरूणां गुरुम्॥१२॥
आज्ञप्तं किल विष्णुना स्वविमुखीकाराय जानन्नपि
सत्यैरेव जनो यदीयवचनैर्व्यामोहितः पश्यति।
मिथ्या सर्वमिदं चराचरगुरुं श्रीरामरूपं सदा
तं वन्दे परराामतत्वरसिकं श्रीशङ्करं सर्वदा॥१३॥

श्री विष्णुस्वामि-निम्बार्क-मध्वरामानुजाभिधान्।
कृष्णचैतन्यरूपं च सन्नमामि सनातनम्॥१४॥

**ब्रह्मादि देवानाविश्य सर्वकामान् प्रपूरयन्।**
**तनु प्रकाशो रामस्य परब्रह्मास्तु मङ्गलम्॥१५॥**

परमकारुणिकशिरोमणि: **श्रीराम: स्वमन्त्रं** तारकाख्यं ब्रह्मणे दत्तवान्। ततो ब्रह्मा संसरन्तो जीवा: अपि श्रीरामं ज्ञात्वा (मन्त्र) मुञ्चेरन्निति मनसि निधाय तेषामुद्धाराय रामनामार्थत एव वेदान् प्रकटितवान्। मन्त्रदानमुक्त-मगस्त्यसंहितायाम्—

**रामेण प्रथमं दत्तं जगन्नाथाय ब्रह्मणे।**
**मन्त्रराजं परं जाप्यं राघवस्य षडक्षरमिति॥**

स मन्त्रो वशिष्ठादिपरम्परया व्यासादीनाजगाम। उक्तं चैतद् वसिष्ठसंहितायाम्। व्यास उवाच—

**साधु पृष्टं त्वया ब्रह्मन् कथये सकलं तव।**
**ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने॥**

**वसिष्ठोऽपि स्वपौत्राय मत्पित्रे दत्तवान् मुने।**
**प्रसन्नहृदयः शुद्धः पिता मे करुणानिधिः॥**

**कुरुक्षेत्रे महापुण्ये पुण्यपर्वणि दत्तवान्।**
**मया च साधितो मन्त्रो जपहोमार्चनादिभिरिति॥**

एकदा ब्रह्मणा मन्त्रो लब्धोऽनुष्ठितश्च। तथापि मनोवचनगोचरातीतं रासरसिकं श्री रामस्वरूपं कथं पश्येयं तस्य दर्शनं तु प्रेम विना न भवति तत् प्रेम मे कथं भवेदिति विचारयन्नग्रतो **राधे** इति कथयन्तमाविर्भूत-प्रेमामृतमग्नहृदयं श्री नारायणमवलोक्य दण्डवत् प्रणिपत्य विज्ञापितवान्। तदा नेत्रे निमीलयेति श्री नारायणेनाऽऽज्ञप्तो ब्रह्मा तथा कृत्वा तेन सह रासस्थलमाजगाम। तत्र च मूर्तिमद्वंशीसहितं राधाकृष्णमवलोक्यानन्दसिन्धु-निमग्न: किमेतदिति यावद्विचारयति तावत्सर्वन्तिरोदधे। तदा ब्रह्मा नारायणं प्रणिपत्य (त्वदीय) वन्मे **प्रेमाभक्ति:** कथं स्यादिति विज्ञापयामास। ततो नारायणो राधावल्लभमन्त्रं ब्रह्माणमुद्दिश्य वैकुण्ठमाजगाम। ब्रह्मापि प्राप्तमनु: सत्यलोकमागत्य मन्त्रप्रभावाविर्भूत प्रेमस्फुरित श्रीरामानन्दनिमग्नहृदयस्तस्थौ।

तत्रागत्य नारदः प्रणिपत्य पितरं भगवन्नानन्दमग्नहृदयोऽन्य इव लक्ष्यसे किं वस्तु भवता समासादितं तत्सूनवे सुश्रूषवे मह्यमपि देहीति विज्ञापितवान् ततो यदास्य प्रेमाविर्भविष्यति तदा स्वयमेव ज्ञास्यतीति तन्मन्त्रं तस्मै समुपदिदेश। उक्तं चैतद् वाराह-वामनयोः–

**एकदा सृष्टिकर्ताऽसौ ब्रह्मा खिन्नमना दधौ।**
**तदाविर्भावमापन्नो हरी राधे पदं ब्रुवन्॥**

**दण्डवत्पतितो भूमौ ब्रह्मा लोकपितामहः।**
**त्राहि गोविन्द गोविन्देत्युच्चै रावं चकार सः॥**

**हरिराह भयं माऽभूद्विधे कल्याणमाप्नुहि।**
**आगच्छ त्वं मया साकं नेत्रमुद्रां विधाय च॥**

**तथा कृत्वा च ददृशे वृन्दावनमखण्डितम्।**
**यमुनापुलिनं स्वच्छं गोवर्द्धनगिरिं तथा॥**

**तत्र कल्पतरुं शुभ्रं रत्नवेदीं च तत्र हि।**
**राधिका सहितं कृष्णं प्रेममग्नं परस्परम्॥**

**बाहुश्लिष्टं मनःश्लिष्टं दृष्टिश्लिष्टं परस्परम्।**
**तदङ्गभासनैर्गोपी जनैरष्टाभिरावृतम्॥**

**तत्रैकान्तस्य निकटे श्रीवंशीमधिदैवताम्।**
**नवमीं तदङ्गकिरणाः कोटिशो गोपिकाः स्थिताः॥**

**ब्रह्मात्यानन्दमग्नो विविध कृतमतिर्नत्वगच्छन्निदानं,**
**किञ्चैतत्कोऽपि मीड्यः किमिति मम मनोभ्रान्तिरन्या किमस्ति।**
**किं वाऽयं दृशिगोचरो मम पतेरानन्दराशावधिः;**
**धन्योऽहं नहि शंशये, हरिकथाऽऽयाता हि मन्ये ध्रुवम्।**[१]

**तावदन्तर्दधे सर्वं हरिरेकः पुरः स्थितः।**
**पुनर्भूमौ निपत्यासौ शिरांसि चतुराननः॥**

---

१. अत्र पादद्वयं स्रग्धरायाः पादद्वयं च शार्दूलविक्रीडितस्य प्रतावेव।

**निधाय प्रणतिं चक्रे ब्रुवन् दासोऽहमन्तिके।**
**स्वामिन्प्रेमात्मिका भक्तिः कथं जायेत मे वद।**
**कृपार्द्रो हरिराहाजं राधावल्लभ सन्मनुम्।**
**ब्रुवन् सर्वैरयं जाप्यः प्रेमाक्तैस्त्यक्तबन्धनैः।**
**मत्कृपालवमाश्रित्य यत्र प्रेमा स्फुटो भवेत्।**
**तत्र दातव्य एषोऽस्ति मया दत्तो मनुस्त्वया।**
**तावन्नारायणोऽप्यन्तर्दधेऽनु ह्यति रागवान्।**
**ब्रह्मलोकश्रियं प्राप्य गणयन्तदवस्थितः।**
**तावदागत्य देवर्षिः प्रोवाच परिसान्त्वयन्।**
**प्रभो किमेतत्का चेष्टा वेदवक्ता भवानजः।**
**वेदोक्ता या भवद्रीतिस्तया युक्तो न लक्ष्यते**
**न जाने किमिदं वस्तु यतो वेदास्तृणीकृताः।**
**अहं त्वां किमपि प्रष्टुं आगतः सर्वतः प्रभो।**
**प्रेमानन्दैकरूपस्य राधिकावल्लभस्य हि।**
**विज्ञाय परमं धाता प्रेमाक्तं तनयं स्वकम्।**
**उपादिशच्च मन्त्रं तं यमृषिस्तमुपादिशत्॥**
**पृथिवीं स उपागत्य वेदव्यासमुपादिशत्।**
**स सुतं श्री शुकं चैव कश्यपं स चिरायुषम्।** इति।

**कश्यपादयं सम्यक् श्री हरिगुरु प्रियादासाचार्यपादमागतः॥**

ननु श्री नारायणेन श्री राधावल्लभमन्त्रः ब्रह्माणमुपदिष्टः यथा यथोपासते स तदेव भवतीति श्रुत्या नत्वन्योपासकोऽन्यं प्राप्नुयादिति सिद्ध्यतीति कथं वाङ्मनोगोचरातीतः श्रीरामः प्रेम्णा दृष्ट इत्युच्यते इति चेच्छृणु।

**तदूर्ध्वं स्वयमाभाति गोलोकः प्रकृतेः परः।**
**वाङ्मनो गोचरातीतो ज्योतीरूपो सनातनः॥**

**तस्य मध्ये पुरं दिव्यं साकेत इति संज्ञितम्** इत्युपक्रम्य पश्चिमद्वारे वृन्दावनमुक्तम्। श्रीरामः तस्मिन्नेव वृन्दावने गो गोपीभिः

राधावल्लभरूपेण तिष्ठति मध्ये च लीलासमुदायं करोतीति सदाशिवसंहितायां स्पष्टमेवोक्तम्–

**साकेतपश्चिमे द्वारे वृन्दावनमदूरतः।**
**गोगणैरावृतः श्रीमान् क्वणद् वेणुविनोदकृदिति॥**

तथा वशिष्ठसंहितायाम्

**अयोध्या पश्चिमे भागे कृष्णस्य परमात्मनः।**
**नित्यं वृन्दावनं धाम चिन्मयानन्दमद्भुतमिति।**

भूर्लीलारुक्मिणी रमा केलिविनोदिनीत्यादि रामायणीय जानकी–नामस्तव प्रमाणात्! सीताराधयोः रामकृष्णयोश्च तत्वतः ऐक्यम्–

**अहं कृष्णश्च रामश्च वृन्दावन विहारवान्।**
**प्रमोदवन सारंगोऽप्यशोकवनसारवित्॥**

**यत्र मे रमणी राधा वृषभानुसुता स्वयम्।**
**मत्स्वरूपैकनिरता सदा मद्रूपसंङि्गनीति॥** भुशुण्डिरामायणात्

श्री मिथिलाचित्रकूट वृन्दावन महावैकुण्ठस्थानेषु तत्तद्रूपेण विहरन् मध्ये साकेत संज्ञिते विहरति इति। पञ्च स्थानेषु युगपद्विहारकर्तृत्वेन च रामः सीता जानकी रामचन्द्रः नित्याखण्डो ये च पश्यन्ति धीरा इत्याथर्वणीय श्रुत्या श्री सीतारामयोरप्यैक्यं सिद्धमेव। एवं राधारामयोरप्यैक्यम्। छाया प्रेमा नित्येति श्री राधायाः भेदाः भक्तिग्रन्थेषु प्रसिद्धाः।

तत्र **नित्या राधा मूलभूता नित्यः कृष्णस्तु षड्विधः।**
**द्वारकेशो माथुरेशो ब्रजेशो नन्दनन्दनः।**
**नन्दस्य नन्दनः कृष्णश्चाद्ये कृष्णे विलीयत।**

इति पुराणसंहिता वाक्यात्। सीतारामरूपमूल राधाकृष्णे नन्दनन्दनादीनां छायाप्रेमाराधादीनाञ्च मोहितत्वं किमाश्चर्यम्। एवं राधा सीतैव तद्रूपी रामचन्द्र इत्यभेद एव मूलराधाकृष्णयोः श्री सीतारामरूपत्वात्।

तथा च श्री राधामन्त्रतः श्रीरामप्रेम्णि प्राप्ते सति श्री सीतारामचन्द्रप्राप्तिर्न विरुद्ध्यते।।

ननु राधावल्लभीय हरिवंश संप्रदाये श्रीरामोपासना कथं संगच्छतेइति चेच्छृणु। **महाशम्भुः स्वयं सोऽपि कपिरूपी दुरासद** इति सदाशिव संहिता वाक्यात्।

**या वंशी राधिका प्रोक्ता सैवेयं हितरूपिणी।**
**भविष्यति कलौ स्वीय सम्प्रदायविशुद्धये।।**

इति भविष्योत्तरवचनात्। शिवहनुमतोरभेदः सिद्ध एव। रुद्रो वंशः समाख्यातः इत्युक्तः कृष्णोपनिषच्छ्रुत्या। वंश्यपि रूद्र एव। तथा च श्री हरिवंशाचार्यो वंशिकावतारो हनुमदभिन्न एवेति सिद्धम्। तेन च हनुमतः श्रीरामोपासकत्वाद्राधावल्लभसम्प्रदायेऽपि श्रीराममंत्रोपदेशो न विरुद्ध एवेति विचार्य्य श्री हरिगुरुप्रियादासाचार्य्यः। पूर्वं स्वप्ने श्री हरिगुरुशोभनाथाख्य श्री महादेवोपदिष्टं श्री राममंत्रं मां शास्त्रमर्यादया पुनरुपदिष्टवानिति। श्री राधावल्लभीयमतेऽपि श्री रामचन्द्रोपासना न विरुध्यते।।

ननु त्वयोभय मन्त्रग्रहणं कृतमित्यन्यैः पूर्वैस्तु नोभयमन्त्रग्रहणं कृतमिति चेदुच्यते। पूर्वं गृहीतराममंत्रा अपि ब्रह्मनारदादयो विना प्रेम वाङ् मनोगोचरातीतः श्रीरामो न स्फुरतीति प्रेमप्राप्त्यर्थं राधावल्लभमन्त्रं जगृहुः। ब्रह्मणो राममन्त्रग्रहणमुक्तमगस्त्यसंहितायाम्।

**रामेण प्रथमं दत्तं जगन्नाथाय ब्रह्मणे।**
**मंत्रराजपरं जाप्यं राघवस्य षडक्षरमिति।।**

वशिष्ठ संहितायामपि। व्यास उवाच–

**साधु पृष्टं त्वया ब्रह्मन् कथये सकलं तव।**
**ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने।**
**वशिष्ठोऽपि स्वपौत्राय मत्पित्रे दत्तवान् मुने।**
**प्रसन्नहृदयः शुद्धः पिता मे करुणानिधिः।**

**कुरुक्षेत्रे महापुण्ये पुण्यपर्वणि दत्तवान्।**
**मया च साधितो मंत्रो जपहोमार्चनादिभिः।**
**षडक्षरो मया दत्तो मध्वाय विदितात्मने।**
**तेनापि साधितो मन्त्रो रामस्य परमात्मन इति।**

एतेनोभयत्रोक्तो व्यासोऽपि प्रेम प्राप्त्यर्थमेव राधावल्लभमन्त्रं नारदाज्जग्राहेति सिद्धम्।।

श्री सम्प्रदायेऽपि श्री राममन्त्रोपासनोक्ता शिव संहितायाम्। यथा–

**रामचन्द्रान्महाशंभुः लब्धवान् मंत्रमुत्तमम्।**
**महाशंभुः प्रणम्यादौ देवदेवं रघूद्वहम्।।**

**सर्वैश्वर्यप्रदं मन्त्रं दत्तवान् वनहेतवे।**
**तस्य विज्ञान मात्रेण महाविष्णुः स्वयं स्वराट्।।**

**कं चापि कालमासाद्य जीवलोकानुकम्पया।**
**देव्यानुबोधितः श्रीमान् विष्णुः सर्वजनेश्वरः।।**

**ग्राहयामासतां देवीं तारकं ब्रह्म वाचकम्।**
**कृतकृत्या तदालक्ष्मीर्लब्ध्वा मन्त्रं षडक्षरम्।।**

**ददौ प्रीत्या ततो देवी विष्वक्सेनाय तारकम्।**
**विष्वक् सेनात्ततो मंत्रं लब्धवान् वैष्णवोत्तमः।।**

**गोपदेव इति ख्यातो मुनिवर्यः सदात्मवान्।**
**वेङ्कटाद्रौ पुरा वेदाः द्वापरादौ पुरा शुकः।।**

**गोपदेवं समासाद्य लभिष्यति षडक्षरम्।**
**भविष्यंति कलावग्रे ब्राह्मणा वेद पारगाः।।**

**श्रुतदेवः श्रुतप्रज्ञः श्रुतधर्मा श्रुतोदधिः।**
**त्रिदण्डिनः शिखायुक्ताः श्रीरामानुज पंचमाः।।**

**मत्समीपे महापीठे वेङ्कटे रङ्गमण्डपे।**

**जपिष्यति चिरं मन्त्रं तारकं तिमिरापहम्।।**

**श्री वैष्णवपदं प्रोक्तं राघवाक्षरचिन्तनात्।**
**इदं सूत्रं महाभाग महाशाम्भवमीरितम्।।**
**सञ्चरिष्यति कालेन रामानुजमुखश्रियमिति।।**

नारायणः श्री राधावल्लभमन्त्रं ब्रह्मणे उपदिष्टवानित्युक्तमिति नारायणस्याप्युभयमन्त्रग्रहणमस्ति। अतः श्रीरामसंप्रदायेऽप्युभयमन्त्र-ग्रहणमविरुद्धम्।

**श्री रामस्य मनुं काश्यां जजाप वृषभध्वजः।**
**मन्वन्तर सहस्रैस्तु जपहोमार्चनादिभिः।**
**ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम्।।**

इति श्री रामतापनीयश्रुत्या रुद्रस्य श्री रामोपासकत्वात्पूर्वोक्त वंशिका रूपत्वाच्च रुद्रसम्प्रदाये श्री राधामन्त्रप्राप्तिप्रसिद्धयोभयमन्त्रग्रहणमविरुद्धमेव। गौडाचार्याणां मध्वान्तर्गतत्वादुभय मन्त्रग्रहणं सिद्धमेव।

**शङ्करः शङ्करः साक्षात् व्यासो नारायणः स्वयम्।**
**तयोर्विवादे सम्प्राप्ते वराकास्तत्र के वयमित्य**भियुक्तोक्ते
शङ्कराचार्यस्यापि शङ्करावतारत्वादुभयमन्त्रग्रहणमविरुद्धम्।

आचार्यमार्गगृहीतस्मृति-पुराण-संहितासु संप्रदाय प्रवृत्तिरुभयमन्त्रग्रहण-रूपा इत्थमेव श्रूयते। तस्मादस्माभिरपि प्राचीनमार्ग एवावलंबितः। इतोऽर्वाचीनास्तु व्याससूत्रतात्पर्याज्ञानात् स्वमतानुकूलमर्थं व्याचख्युः ततश्च तत्तदाचार्यमतावलम्बिनां तत्तदाचार्यव्याख्या तात्पर्यानभिज्ञानां मतविरोधमवगत्य श्रीकृष्णचैतन्यभक्तावतारसमनन्तरं लब्धपरमप्रियसखीरूपो रासमण्डले वर्तमानो मुक्तः श्री शुकाचार्यस्तेषां मतानामेकतात्पर्यार्थकत्वं प्रतिपादयितुं नारदद्वारा समागतब्रह्म संप्रदाये श्री प्रियादासाचार्य रूपेण प्रादुर्बभूव।। तथा च भविष्ये–

**अतिप्रभाव संयुक्तश्चैतन्य इति विश्रुतः।**
**भक्तः सर्वस्वपरो भविष्यति महीतले।**

**तस्य शिष्य प्रशिष्यैस्तु शास्त्रज्ञैर्ग्रंथकारिभिः।**
**कञ्चित्कालं तु शास्त्राणि स्थास्यन्ति मुनिसत्तम॥**

**भविष्यति यदा भावस्तच्छिष्यैस्तु महात्मनाम्।**
**अवतीर्य शुकस्तत्र प्रियाचार्य्यो भविष्यतीति॥**

न च मुक्तस्य कर्मफलभोगासम्भवाज्जननादिकं कथमिति वाच्यम्। तेषां सर्वेषु कालेषु कामचारो भवतीति श्रुत्वा कृष्णवज्जीवोद्धाराय स्वसम्प्रदाये स्वेच्छया भगवदिच्छया वा प्रादुर्भावः। एवं तात्पर्यम्। स च सुसिद्धान्तोत्तम सुमार्गश्रुति सूत्रतात्पर्यामृतादीन् ग्रंथान्विधाय सकलमतविरोधं प्रदर्श्य श्री राधाकृष्णं प्रेमाकुलहृदयश्चिरमिह लोके विचरितुमनिच्छन् मामुपदिश्य निजश्रुति सूत्र तात्पर्यामृतग्रन्थमतानुसारेण श्री भगवद् वेदव्यास सूत्र सविस्तर व्याख्यां कर्तुमनुशास्य च वाङ् मनसगोचरातीतरासमण्डलं गत्वाऽलंकृतवान्। स एवेदानीं श्री वान्धवाधीश्वर महाराजाधिराज सिद्धि श्री जयसिंहदेव ज्येष्ठ तनय विश्वनाथसिंह नाम्नो मम हृदयकमले स्थितः उभयमन्त्रोपदेशक स्तात्पर्यवृत्या वाङ्मनसगोचरातीत श्री रामचन्द्र निरूपणे व्यासस्य तात्पर्यमवगत्य तत्सूत्राणां व्याख्यामारभते।

**अथातो ब्रह्म जिज्ञासा॥१॥१॥१॥**

ननु श्रुति स्मृतिभिरेव चिदचितोर्ब्रह्मरूपत्वे सिद्धे ब्रह्मजिज्ञासा न घटते। व्यासेन किमर्थं वेदान्तशास्त्रमारब्धमिति चेच्छृणु।

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥**

**भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः।**
**ततो मां तत्वतः ज्ञात्वा विशते तदनन्तरमित्यादि**
भगवद्वाक्य सिद्धि प्रयोजनाय।

तथाहि—अहं ब्रह्मास्मीति ब्रह्मभावनया ब्रह्मावाप्तिसमनन्तरं प्रसन्नः दु:खात्यन्ताभाववानात्मा यस्य सः न शोचति न काङ्क्षति। अर्थान्मनोनाश-

वासनाभाववान् सर्वभूतेषु समः स्थूलसूक्ष्म कारणः महाकारणाभिधशरीरचतुष्टय-विमुक्तः चिन्मात्रकैवल्यरूपेण स्थितः भगवत्कृपया लब्धषष्ठसखीरूपः पूर्वानुष्ठितराधामन्त्रप्रभावेण पराभिधां प्रेमलक्षणां भक्तिं लभते। तया पराख्यया भक्त्या सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिवाच्यो यावान् यश्चाहमस्मि तं मां तत्त्वतस्सर्वत्र परिपूर्णब्रह्मरूपेण जानाति ततस्तदनन्तरं षडक्षरमन्त्रजपप्रभावेण ततो राम एव परं तत्वमिति हनुमदुपनिषत् वाक्यात् मां तत्वतो ज्ञात्वा रामत्वेन ज्ञात्वा विशते वाङ् मनसगोचरातीत साकेतलोके रासमण्डलमिति शेषः तद् ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवमिति ब्रह्म विन्दूपनिषदि शुको मुक्तो वा वामदेव इति श्रुत्या शुकाचार्यो युक्तस्तस्य सखीरूपेण रासमण्डल एव प्रवेशः।

**तमुवाच प्रियारूपं लब्धवन्तं शुकं हरिः।**
**त्वं मे प्रियतमा भद्रे सदा तिष्ठ ममान्तिके॥**

इति पद्मपुराणीय स्मृतेः। अन्यथा आकाशवन्निराकार ब्रह्म भावे सा परानुरक्तिरीश्वरे इति सूत्र प्रतिपादित पराख्यभक्तिलाभः प्रवेशश्च न सम्भवति। श्री रामनामाभिन्नान्तर्यामि प्रकाशब्रह्मज्ञानमन्तरा वाङ्मनसगोचरातीतः श्री रामचन्द्रो न ज्ञायते। अतः श्री व्यासेन ब्रह्मज्ञानाय वेदान्तशास्त्रमारब्धमिति।

ननु राधा मन्त्र प्राप्तिमात्रेणैन प्रेमाविर्भावः तत्सहितश्री राममन्त्रजपादेव वाङ्मनसगोचरातीत रसरूप श्री रामज्ञानं भवतीति किमर्थं व्यासो ब्रह्मजिज्ञासायां श्रमं चकारेति चेच्छृणु।

**अथानघाङ्घ्रेस्तव पादतीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम्।**
**भूतेष्वनुक्रोशसुसत्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव।**

इत्यादि प्रमाणैस्तेषां सतां सङ्ग एव दुर्लभः। तत्रापि ये भाग्यवशात् सज्जनप्राप्तराधामन्त्रं जानन्ति तेभ्यो लब्धमन्त्राः प्रेम परतन्त्रा अर्थज्ञान पूर्वकं श्रीराममन्त्रं न जपिष्यन्ति येन जपेन वाङ् मनसगोचरातीतं श्रीरामं जानीयुः। ये च सत्सम्प्रदायलब्ध श्रीराममन्त्रा अपि भविष्यन्ति ते सर्वोत्कृष्टं मन्यमानाः राधामन्त्रं न जपिष्यन्ति। अतः परमकृपालुः श्री वेदव्यासः

पूर्णमद इत्यादि श्रुत्यभिप्रायेण यदैषां ब्रह्मज्ञानेन जपविरोधिनी भेदबुद्धिर्गमिष्यति तदा ते गतमताभिमाना राधामन्त्रं जप्त्वार्थविचारपूर्वकं श्रीराममन्त्रं जपिष्यन्ति। तदैते इहैव शरीरे मुक्तावस्थायां वाङ् मनसगोचरातीतं श्रीरामं ज्ञात्वा।

**अकारे शोधितं पद्ममुकारेणैव भिद्यते।**
**मकारे लभते नादमर्द्धमात्रा तु निश्चला।**
**शुद्ध स्फटिकसङ्काशं किञ्चिच्छूर्यमरीचिवद्**
**लभते योगयुक्तात्मा पुरुषोत्तम तत्परः।**

इति योगतत्वोपनिषच्छ्रुत्या निश्चलार्द्ध मात्राररश्मिद्वारा शुद्ध स्फटिकसंकाशं श्रीरामचन्द्रं यास्यन्तीत्यभिप्रेत्य ब्रह्मज्ञानाय वेदान्तशास्त्रं प्रवर्तयामास।।

ननु शुद्धस्फरिक सङ्काशमिति आनन्दरूपममृतं यद्विभाति तदा प्रणवादानन्दमेवेति श्रुतिभ्यां शुक्लरूपवर्णनेन रामं दूर्वादलश्याममिति विरूद्धयेदिति चेदुच्यते। अतिघन शुक्लवर्णः हरिद्रूप एव भाति। यथा गम्भीर गंगाह्रदे जलं हरिद्रूपं भाति तथात्रापि। परन्तु दूर्वातसीकुसुमघनादिवर्णाः क्षीरस्फटिकजलादिवर्णाच्च परस्परं स्वस्मिन्नेव विरुद्धाः श्रीरामचन्द्रस्वरूपे कथमुपमानभूता भवेयुरिति श्रीरामचन्द्रस्वरूप वर्ण चित्ररूपवदस्त्वनिर्वचनीय एवेति किमपि हरिद्वर्णमभिधाय नवदूर्वाद्युपमानैस्तस्य वर्णः सूच्यते अतएव शङ्कराचार्यादिभिः निर्विशेषमित्युच्यते। कुतस्तद्वर्णैस्तद्धरितवर्णस्य वर्णयितुमशक्यत्वात्। अतएवानन्दो द्विविधः प्रोक्तो मूर्तश्चामूर्त एव च। अमूर्तस्याश्रयो मूर्तः परमात्मा नराकृतिरिति स्मृतिप्रतिपाद्यं तत् द्विभुजत्वं स्थाप्यमेव स्यात्। तमिमं वेदव्यासाभिप्रायमविदित्वा पूर्वाचार्यसम्प्रदायिनः व्याससूत्रतात्पर्यानभिज्ञाः स्वस्वाचार्याणामप्यभिप्रायमविज्ञाय नानार्थान् कल्पयित्वा विवदमानास्तानपश्यन् पूर्वाचार्य्यमतानां तात्पर्येणैक्याय श्री भगवद् वेदव्याससूत्राणां श्रुतिस्मृतिसंहितादि प्रमाणकं मुख्यार्थमस्मिन् काले नवीनमिव भासमानं व्यक्तीकर्तुं तद् व्याख्याने मामन्तः प्रविष्टं प्रेरयत्याचार्य इति। तत्रादौ वेदान्त तात्पर्यावधि श्रीरामस्वरूपज्ञानाधिकाराणां निरूपणार्थमात्मानात्मविवेकज्ञान पूर्वकं श्रीरामनामाभिन्नान्तर्यामि प्रकाश ब्रह्म ज्ञानात् तात्पर्य गम्यवाङ्मनस्

गोचरातीतांतर्य्यामि प्रकाशि श्रीरामचन्द्रप्राप्तये वेदान्तशास्त्रं सूत्रयामास भगवान् सूत्रकार:। तत्सूत्रार्थ: विनात्मानात्मविवेकं न घटते इति आत्मानात्मविवेकज्ञानं प्रस्तूयते न तु जड़त्वे तत्रादावात्मानात्मविवेक: प्रस्तूयते। आत्मानात्म विवेकज्ञानशून्यस्य वेदान्ततात्पर्य्यावधि: श्रीरामचन्द्रस्वरूप: अनधिकारात्।

ननु जडचेतनयोर्देहादिजीवयोरभेदात्कथमात्मानात्मविवेकज्ञानं प्रस्तूयते इति चेन्न। जीवस्य सुख दु:खादि भोक्तृत्वेन जडाद् भेदात्। ननु तयोर्भेद सम्भवेऽपि शुक्लो घट इत्यादिवत्तादात्म्यं किन्न स्यादिति चेन्न। दीपघटयोरिव प्रकाश्यप्रकाशित्वेन तयोर्विषयविषयित्वस्मरणात्। गुणगुणिनोस्तु तादात्म्याङ्गीकाराच्च न चान्ध: काणो मूको बधिरोऽहमित्यादिप्रत्यक्ष प्रमाणविरोधमिति वाच्यम्। जन्मान्तरे जीवस्य काणत्व मूकत्वाद्यभावदर्शनान्न जीवस्य काणत्वादिकम्। अतो न हि तत् प्रतिपादयितुं शक्यम्। ननु सुख दु:खादि भोक्तृत्वमुक्तं तस्य मनोधर्मत्वान्न देहानात्मप्रसिद्धेरिति चेदुच्यते। विना जीवसंयोगं केवलं मन: नानुभवितुं शक्नोति करणत्वाज्जड़त्वाच्च। अथायमशरीर इत्यादिश्रुत्या देहानात्मप्रसिद्धिश्च। तस्मात्सर्वलोकप्रत्यक्षस्य अज्ञत्वादि समानाधिकरण्यगोचरस्य भ्रमत्वशङ्काकलङ्कितस्य प्राबल्य-मित्यास्थेयम्।

ननु स जीवात्मा किं आगन्तुकचैतन्य: स्वतो अचेतन: अचेतनेन मनसा यदा संयोगस्तदा चैतन्यमुत्पद्यते न स्वतश्चैतन्यमिति। आहोस्विन्नित्य चैतन्य स्वभाव एव जीव इति संशय:। किं तावत् प्राप्तमागन्तु मात्मनश्चैतन्यमात्ममन: संयोगजन्यमग्निघटसंयोगजरोहितादिगुणवदिति प्राप्तम्। जीवस्य नित्यचैतन्यत्वे हि सुषुप्तमूर्छितानामपि चैतन्यं स्यात्। तेन पृष्टा: सन्त: वयमचेतयामहीति। न जल्पन्तीति। जाग्रति स्वस्था: आत्मान: चेतयमाना: दृश्यन्ते। अत: कदाचित् क्व चैतन्यादागन्तुकचैतन्यो जीवात्मेति। तथा च नित्यचैतन्यस्वभावो जीव: साधनाधीनज्ञानत्वात् व्यतिरेकेणेश्वरवदित्येवं प्राप्तेऽभिधीयते।

नित्य चैतन्य एवाययात्मा सुषुप्त्यादिसाक्षित्वोपलब्धेरिति। यथेश्वरस्य साधनाधीनत्वमचैतन्यं च न स्यात्तथा जीवस्य न। अन्यथा सुषुप्तिमधिकृत्य

यद्वैतन्न पश्यति पश्यन् वै तन्न पश्यति। न हि दृष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदित्यादिश्रुतयो विरुद्धेरन्। एतदुक्तं भवति। दृष्टश्रुतपदार्थानामिन्द्रियविषयत्वादिन्द्रियाणां मनसा सह पुरीततिनाड्यां लीनत्वान्न पश्यतीत्युच्यते। पश्यन्निति तु स्वरूपचैतन्याभिप्रायमत एव एतन्मर्त्यशरीरमतिसृज्य ब्रह्मणैव पश्यति ब्रह्मणैव शृणोति इत्यादि श्रुतयो न संगच्छेरन्। यदि सुषुप्तौ जीवात्मनि स्वतश्चैतन्यं न स्यात्तर्हि विषयेन्द्रियैस्सह जड़स्य मनसः पुरीततिनाड्यां लीनत्वे सति हे देवदत्तेति कैश्चिदन्यैराहूय ते च सति स्वयं जीवात्माऽचेतनत्वेना-समर्थत्वान्मनोविकारैः सह कथं जाग्रदवस्थामापद्यत इति मनसा जीवं कः संयोजयेदिति। एतेन आत्मनश्चेतनद्रव्यत्वात् घटवदित्यादितर्काश्च बाधिताः। तस्मान्नित्य चैतन्यस्वरूपो जीवात्मेति निश्चिनुमः। स च किं परिमाणो जीव इति चिन्त्यते। किमणुपरिमाण उत मध्यमपरिमाण आहोस्विन्महापरिमाण इच्युच्यते। अणुपरिमाणो जीवः उत्क्रान्तिगत्यागतीनां श्रवणादुत्क्रान्तिस्तावत्स जीवः यदास्माच्छरीरात्समुत्क्रामति सहैव तैस्सवैंरुत्क्रामतीति गतिरपि ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते गच्छन्तीति। आगतिरपि तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे इति। आसामुत्क्रान्तिगत्यागतीनां श्रवणादणुर्जीव इति सिद्धम्। किञ्च चक्षुषोर्वामूर्ध्नोर्वान्येभ्योऽपि वा शरीर प्रदेशेभ्य इत्यादि श्रुतिषु देह प्रदेशेभ्यो जीवानां चोत्क्रान्तौ अपादानवचना-च्चाणुर्जीवात्मेति। अपि च एतास्तेजोमात्राः समभ्यादधानो हृदयमेवान्वाक्रामति शुक्रमादाय पुनरेति स्थानमिति च श्रुतिरभ्यन्तरेऽपि शरीरे जीवस्य गत्यागती भवतस्तस्मादासामुत्क्रान्तिगत्यागतीनां सातत्यश्रवणादणुर्जीवात्मेति।। तस्य हरिचन्दन विन्दुवत्सकल शरीरे व्याप्तत्वम्। एवं ब्रह्मविदाप्नोति परमिति। श्रुत्युक्तदिव्यादिव्यशरीरातिरिक्तस्य प्रकाशिनः समस्तवेदान्ततात्पर्यावधेः साकेतमध्यवर्तिनोऽसंकुचितचैतन्यविकाशस्य परमात्मनः श्रीरामस्यापि मुख्यतः स्वप्रकाश्यब्रह्मव्याप्त्या जड़चेतनयोरन्तर्यामित्वमस्ति न तु स्वरूपेणेति। तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभातीति श्रुतेः। यदद्वैतं ब्रह्म यस्य तनुभेति वेदसारोपनिषत् श्रुतेश्च।

ननु किं स्वामिभृत्यवज्जीवब्रह्मणोस्स्वस्वामिभावस्सम्बन्धः। आहोस्वि-दग्निविस्फुलिङ्गवदंशांशि भावस्सम्बन्धः इति विचिकित्सायां सिद्धान्त्यते। जीवो हि ब्रह्मणोंऽशोऽस्ति इति यथाग्नेर्विस्फुलिङ्ग इति। ननु ब्रह्मणि विकारापत्तिरिति चेन्न। अंश इवांश इति व्युत्पत्तेः। यथा चन्द्रांशः शुक्रः यथा च हीरकाकारे सूक्ष्म हीरकखण्डो हीरकश्च स्वभावतः पृथगेव तिष्ठति न तु हीरकं भित्वा हीरकखण्डो भवति परन्तु हीरक खण्ड इत्युच्यते। तथा विस्फुलिङ्गा अग्नौ भिन्ना एव तिष्ठन्ति। अग्नित्व साम्यादग्नेर्विस्फुलिङ्गा इत्युच्यन्ते निस्सरन्ति च। यदि भिन्ना न स्युस्तर्हि सूर्यादप्युद्भवेयुः सूर्यसिद्धान्ते सूर्यस्याग्निपिण्डत्वेन वर्णनात्। तथा चित्त्वेन साम्यात् समष्ट्यात्मना प्रकाशब्रह्मणि स्थिता जीवा सृष्टिसमये व्यष्टीभवन्ति विस्फुलिङ्गव-दित्यभिप्रायस्तस्मान्न हि ब्रह्म खण्डो जीवो भवति। अजो नित्यः शाश्वतोऽयं पुराण इति स्मरणात्। वेदान्ततात्पर्यावधि प्रकाशस्वरूप श्रीरामेण उपासनया जीवस्य स्वस्वामिभावसम्बन्धोऽपि इत्यनवद्यम्। एतेनानादिपृथक् सिद्ध एव जीव इति। न चानुत्पन्नत्वाच्चित्वाच्च जीवः परमात्मवदिव कुतो न भवतीति चेन्न। जीवस्यानेकत्वात्। सोऽन्वेष्टव्यः तमेव विदित्वा मुनिर्भाति य आत्मनि तिष्ठन् य आत्मानमन्तरोऽयमेकरूपमयतीति चैवं जातीयको भेदनिर्देशो नासति भेदे युज्यते। किं च जीव ब्रह्मणोश्चित्वं चाविशिष्टं यथा अग्निविस्फुलिङ्गयोरग्नित्वमिति। तदंशमादायैकत्वं न तु स्वरूपेणेति।।

ननु जीव ब्रह्मणोश्चित्वाविशेषेण जीव एव तन्नियन्ता किन्न स्यादिति चेन्न। जीवस्याणुत्वात् व्याप्यत्वाच्च। नन्वात्मा संसारान्मुक्तः सन्नणुस्वरूपे-णावतिष्ठते। आहोस्विदन्येन भगवत्प्रसादलभ्येन येन केन चिद्रूपेणेति विचिकित्सायामुच्यते। सोऽश्नुते सर्वान् कामान् ब्रह्मणा सह विपश्चितेति जीवात्मनस्तेन सह समस्तभोगश्रवणादणुस्वरूपत्वेन भोगस्य कर्तुमशक्यत्वेन मुक्तस्य चेतनानादि सिद्धानन्दघनभगवत्प्रसादलभ्यानिर्वचनीय परमोपासका-भीष्टादिरहस्याधारभूतपरमपुरुषातिप्रियतमा विग्रहलाभ इत्यवगम्यते। अतः प्राकृतशरीरगताज्ञानजन्याहंममेत्यस्य सर्वलोक प्रत्यक्षस्थानर्थहेतोर्नाशायोक्त-स्यात्मस्वरूपेण परमात्म श्रीरामचन्द्रस्वरूपसाक्षात्कार साधन भूतोपासनप्रतिपत्तये

वेदान्तशास्त्रमारब्धम्।

**ननु ''तदूर्ध्वं स्वयमाभाति गोलोकः प्रकृतेः परः।**
**वाङ् मनो गोचरातीतो ज्योतीरूपः सनातन''॥**

इति सदाशिवसंहिता वाक्येन श्रीरामलोकस्य वाङ्मन्सगोचरातीतत्वात् तस्य तु सुतरां वाङ् मनोगोचरातीतत्वात् तदुपासन प्रतिपत्तिः कथं स्यादिति चेन्न। श्रीरामनामाभिन्नान्तर्यामिप्रकाशब्रह्म ज्ञानेन तदुपासनप्रतिपत्तेः तस्य च तत्तादात्म्यात्। ननु रामनामाभिन्नान्तर्यामिप्रकाशब्रह्म कथमिति चेदुच्यते। यस्मिन् गुणाः वर्तन्ते तद् ब्रह्म। अथ कस्मादुच्यते ब्रह्मेति वृहन्तो ह्यस्मिन् गुणा इति ब्रह्मेति श्रुतेः।

**रकाराज्जायते ब्रह्मा रकाराज्जायते हरिः।**
**रकाराज्जायते शम्भू रकारात्सर्वशक्तयः॥**

**आदावन्ते तथा मध्ये रकारे सुप्रतिष्ठितम्।**
**विश्वं चराचरं सर्वमवकाशेन नित्यशः॥**

**यथा करण्डे रत्नानि गुप्तान्यज्ञैर्न दृश्यते।**
**तद्वन्मन्त्राश्च वेदाश्च रकारे सुप्रतिष्ठिताः॥**

इति स्मृतेश्च। श्रीरामनाम्नि सर्वे गुणाः वर्द्धन्ते सर्वे वेदाः सर्वे देवाश्च सर्वाणि विश्वानि तिष्ठन्ति उत्पद्यन्ते चेत्यस्मात्। उक्त श्री राम मन्त्रार्थे स्पष्टतयाभिहितमस्ति। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति श्रुत्या ब्रह्मणः सकाशाच्च सर्वम् जगदुत्पद्यते। तस्माच्छ्रीरामनामब्रह्मणोरैक्यमर्थसाम्यात्।

**रमन्ते योगिनो यस्मिन् सत्यानन्दे चिदात्मनि।**
**इति रामपदेनासौ परब्रह्माभिधीयते इति॥**

श्री राम तापनीयश्रुतेश्च। तच्च ब्रह्म किं रूपम् भारूपः सत्यकामः सत्यसंकल्प इति श्रुत्या भारूपम्। कस्य भारूपम्। श्री रामचन्द्रस्य—

**यस्य भासा सर्वमिदं विभातीति श्रुतेः।**
**प्रकाशो रामचन्द्रस्य परब्रह्म प्रकाशिनः॥**
**भास्करस्य यथा धर्मश्चन्द्रस्य चन्द्रिकोज्वला।**

इति ब्रह्मसंहितावाक्यात्।

**यस्यानन्तावताराश्च कला अंशा विभूतयः।**
**आदेशा विष्णु ब्रह्मेशा परब्रह्मस्वरूपभा॥**

इति सुन्दरीतंत्राच्च

**नखेन्दु किरणश्रेणी पूर्णब्रह्मैककारणम्।**
**केचिद्वदन्ति तस्यांशं ब्रह्मचिद्रूपमव्ययम्॥**

इति पद्मपुराणीय स्मृतेश्च। तत्प्रकाश ब्रह्मज्ञानेन सखीरूपं षष्ठशरीरं दत्वा वाङ्मनोगोचरातीतप्रकाशी श्रुतितात्पर्यगम्यः श्रीरामचन्द्रः प्राप्तो भवति। षष्ठशरीरं किं भवति। प्रथमं स्थूलशरीरे जाग्रदवस्थाभिमानी विश्वः। सूक्ष्मशरीरे स्वप्नावस्थाभिमानी तैजसः। कारणशरीरे सुषुप्त्यवस्थाभिमानी प्राज्ञः। महाकारणशरीरे तुरीयावस्थाभिमानी ब्रह्मेत्यवस्थाचतुष्टयानन्तरं पञ्चमकेवलस्वरूपाभिमान्यात्मा तत्स्वरूपे स्थितिभूतः।

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमैवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति॥**

मुक्तस्य विग्रहलाभ इति श्रुति प्रामाण्यात्। षष्ठशरीरं प्राप्य ब्रह्मणैव पश्यति ब्रह्मणैव जिघ्रति इत्यादि श्रुत्या ब्रह्मरूपावाप्तिसमनन्तरं वाङ् मनोगोचरातीत श्रीरामचन्द्रप्राप्तिर्भवति। तदर्थं श्री रामनामाभिन्नान्तर्यामि प्रकाशब्रह्म जिज्ञासायै वेदान्तशास्त्रमारभते।

अथातो ब्रह्म जिज्ञासेति सूत्रेऽथ शद्वः आनन्तर्यार्थः परिगृह्यते। ननु मंगलानन्तरारम्भ प्रश्नकार्त्स्नेष्वित्यमरकोशादथ शद्वस्य वहवोऽर्था-स्सम्भवन्ति। तत्राथ योगानुशासनमिति यथाऽथ शब्दः आरम्भार्थकः योगशास्त्रमारभ्यत इति। तद्वदत्रापि किं न स्यात्तत्रोच्यते। किं सूत्रे जिज्ञासापदं

ब्रह्मज्ञानेच्छापरं उत विचारलक्षकम्। आद्येऽथ शब्दस्यारम्भार्थकत्वे अथ आरभ्यत इति सूत्रार्थः स्यात्। स चातिगतः तस्यानारभ्यत्वात्। नहि प्रत्यधिकरणं ब्रह्मज्ञानेच्छा क्रियते। किन्तु ज्ञानेच्छयाऽनेक प्रकारको विचारः क्रियते न द्वितीयः कर्तव्यपदाध्याहारं विजिज्ञासा पदस्य विचारलक्षकत्वाद्योगात्। कर्तव्यपदाध्याहृते च ब्रह्मविचारः कर्तव्यः। आरब्धस्य इति वाक्यार्थे तेनैवारम्भोक्तेरथशब्दवैयर्थ्यात्। किन्तु वेदान्तशास्त्रेष्वानन्तर्य्यार्थतैवाथशब्दस्य युक्तेति। ननु सूत्रकृता शास्त्रादौ मङ्गलकार्यमिति हेतोस्सूत्रे अथ शब्दः प्रयुक्तः। अतो मङ्गलार्थक एवेति चेन्न। ब्रह्मविचारः कर्तव्योऽथ मङ्लमिति वाक्यार्थे अथ शब्दस्य समन्वयाभावात्। अतो न हि तस्यार्थो मङ्गलम्। किन्तु तच्छ्रवणमुच्चारणं मङ्लकृत्यं करोति।

**ओंकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणःपुरा।**
**कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभाविति॥**

स्मरणात् तस्मादथ शब्दस्त्वानन्तर्य्यार्थ एवेति। नन्वथ शब्दस्यानन्तर्यार्थकत्वेपि कस्यानन्तर्यामीति विचिकित्सायामस्तु धर्मविचार इव ब्रह्मविचारेऽपि वेदाध्ययनं पुष्कलकारणमिति चेन्न। स्वाध्यायानन्तर्य्यस्य ब्रह्मविचारे साधारणकारणत्वादुपनयनब्रह्मचर्यादिवत्। ननु तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुत्येह ब्रह्मजिज्ञासायां वेदाध्ययनाद्यसाधारणकारणमिति चेन्न। कार्य्यत्वावच्छिन्न कार्यनिष्ठकाम्यता निरूपितकारणाश्रयभिन्नत्वमसाधारणत्वम्। लोके वेदाध्ययनादेः प्रागप्यधीतवेदान्तब्रह्मजिज्ञासोपपत्तेः। तमेतं वेदानुवचनेन ब्राह्मणाः इत्यस्याः श्रुतेः तात्पर्य्यन्त्वसिद्धान्तकरणविषयमिति तथाहि। यद्यप्यन्तःकरण शुद्धिद्वारा कर्मणो ब्रह्मजिज्ञासायां हेतवस्तथापि तेषां कर्मणां न वेदान्त शास्त्राधिकारिणो विशेषणत्वम्। जन्मान्तरकृतानां कर्मणामपि अन्तःशुद्धिफलहेतुत्वात्। तस्मादुक्तरीत्याथ शब्दस्यार्थान्तरासम्भवादानन्तर्य्यवाचित्वे सति तदेवानन्तर्यमवधित्वेनाऽसाधारणः ब्रह्म जिज्ञासायामुच्यते। पूर्वमीमांसा निरूपितधर्मलब्धान्तः करणशुद्धि द्वारा नित्यानित्यवस्तुविवेकेहामुत्रार्थ फलभोगविरागशमदमोपासना तितिक्षा समाधान श्रद्धाख्यसाधन सम्पन्मुमुक्षुत्वमिति। तस्मादथ शब्दे यथोक्त साधनसम्पत्यान-

न्तर्य्यमुपदिश्यते।

ननूक्ताविवेकादिकं न सम्भवति। अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतमित्यादि श्रुत्या स्वर्गोद्देश्यक यज्ञादिकर्मफलस्य नित्यत्वेन ततो वैराग्यसिद्धेरित्याक्षेप परिहारार्थस्सूत्रेऽतः शब्दो हेत्वर्थकः यस्मात्तद्यथेह कर्मजितो लोकःक्षीयत इत्यादिर्वेद एवाग्निहोत्रादीनां श्रेयः साधनानामनित्यफलतां दर्शयति। ननु श्रुत्योर्विरोध इति चेन्न। अक्षय्यं ह वा इति श्रुत्यन्तःकरण शुद्धिद्वारा ज्ञानोत्पत्यनन्तरं ब्रह्मप्राप्तिरूपफलस्य नित्यत्वश्रवणात्। अस्मिन् जन्मनि जन्मान्तरे वा पूर्वमीमांसानिरूपितकर्मकरणेनान्तः करण शुद्धि द्वारा साधन चतुष्टय सम्पत्यनन्तरं अतो हेतोः ब्रह्मजिज्ञासा कर्तव्या। अथवा साधन भक्त्यनन्तरं अतः निर्गुण भक्तितः ब्रह्मजिज्ञासा कर्तव्येति। ब्रह्मणो जिज्ञासा ब्रह्म जिज्ञासा।

**निश्चलं निर्विकल्पं च निराधारं निराश्रयम्।**
**उपाधिरहितं स्थानं वाङ्मनोऽतीतगोचरमिति॥**

तेजोबिन्दूपनिषच्छुत्या अपराजितेति साङ्केतिकनामसूचित श्रीरामलोक-स्य वाङ्मनोगोचरातीतत्वात् तज्जिज्ञासा नोपपद्यते। अतो ब्रह्मशद्बेन श्रीरामना-माभिन्नान्तर्यामि प्रकाशब्रह्माभिप्रेतं तज्ज्ञानेन वाङ्मनोगोचरातीत श्री रामःषष्ठ शरीरं प्रदाय स्वयमेव स्फुरति। यत्पृष्टवांस्तस्य च नामरूपलीलाऽथ धामानि तु चिन्मयानि। मनोवचोगोचररोधितानि स्वयं कृपातः स्फुरणं श्रयन्तीति विश्वम्भरोपनिषच्छुतेः। तद् ब्रह्म किं ज्ञातमज्ञातं स्यात्। अथ सर्वथाऽज्ञातं नैव शक्यम् जिज्ञासितुं सर्वथा ज्ञातस्योद्देश्यत्वाद्योगात् व्यासादिकृतोपदेशानां जीवोद्धारकत्वेनोपदेशवैयर्थ्याच्च। यदि ज्ञातं तर्हि जिज्ञासानुपपत्तिरिति चेन्न। ब्रह्मशद्बादिनान्यतो ब्रह्मणो ज्ञातत्वेति विशेषतो जिज्ञासोपपत्तेः। ननु यादृशं ब्रह्म जिज्ञास्यं तादृशं न निर्णेतुं शक्यं विप्रतिपत्तिग्रस्तत्वात्। तथा हि। महोदेवो मर्त्यां आविवेशेति प्रमाणसद्भावाच्छद्ब एव ब्रह्मेति शाब्दिकाः। केचिज्ज्योतिर्विदः केवलं काल एव ब्रह्मेति प्रतिपादयन्ति।

**कालः सृजति भूतानि कालः संहरतेऽपि च।**
**कालेन सर्वं भवति कालात्सर्वं प्रवर्तते॥**

इति स्मरणात्। प्रकृतिः कर्त्री नित्या विम्बी च जीवोऽनेकोऽणुः ईश्वरो निर्विकारो विभुरेकः सच्चिदानन्दविग्रहश्चेति साङ्ख्याः अथातो धर्म जिज्ञासेति सूत्रोक्तो धर्मो यज्ञस्वरूप एवेति मीमांसकक्लेशकर्मविपाका शयैरपरामृष्टः पुरुषविशेषः ईश्वरः इति योगसूत्रात्।

पुरुषविशेषो ब्रह्मेति पातञ्जलाः। देहेन्द्रियादि विलक्षणो विभुरयमात्मा नवविशेषगुणाश्रयः तस्य द्रव्यगुणकर्मसमवायानां नित्यसम्बद्धानां साधर्म्य-वैधर्म्याभ्यां तत्वज्ञानेन साक्षात्कारोपासनसहितात् नवानां वैशेषिक गुणानां प्रागभावे सह वृत्तिध्वंस इति एवानन्दावाप्तिरिति काणादाः। आत्मा द्विविधः। जीवात्मा परमात्मा च। तत्र परमात्मा नित्यज्ञानेच्छा प्रयत्नवानेको विभुः सर्वज्ञः सर्वेश्वरः इति गौतमाः। एवं वहवोऽनेकशास्त्रवादिनो विप्रतिपन्नाः वेदान्तशास्त्रेऽपि परस्परविरुद्धाः सूत्रार्थाननेकधा वर्णयन्त्याचार्याः। तथा हि। ब्रह्मातिरिक्तं नास्ति केचित्। ब्रह्मैव नामरूपवैचित्र्येण सच्चिदानन्दांशानेवातिरो-भाव्यजड़जीवान्तर्य्यामिरूपेण स्वयं प्रादुर्भूतमित्यपरे। सृष्टि स्थितिसंहार-नियमनज्ञानाज्ञानमोक्षाः यतस्तज्जडजीवाभिन्नं स्वतंत्रं विष्ण्वाख्यं ब्रह्मेत्यन्ये। नामरूपाविभागानर्ह सूक्ष्मचिदचिद्विशिष्टनिमित्तोपादानकारणं ब्रह्मेत्यपरे रामानुजाः। अभिन्ननिमित्तोपादानकारणं कृष्णाख्यं ब्रह्मेत्येके (गौड़ाः) एवमन्येऽपि वहवःश्रुतिस्मृति पुराणसिद्धानि सर्वमतानि तथा चैवं रूपमेवेति ब्रह्म निश्चेतुं न शक्यते जिज्ञासुभिः। एवं श्रुतिभिरपि निश्चेतुं न शक्यते। तथा हि निर्विकारं निरञ्जनमिति निर्विकारत्वम्।

**यतो वा इमानि भूतानि जायन्ते**
**इति सविकारत्वम्।**

यचो वाचो निवर्तन्ते अप्राप्य मनसा सहेति मनोवचनागोचरत्वम्। सत्यञ्ज्ञानमनन्तं ब्रह्मेत्यादिभिर्वचनगोचरत्वम्।

**घृतमिव पयसि निगूढ़ं भूते भूते वसति विज्ञानम्।**
**सततं मन्थयितव्यं मनसा मन्थानभूतेनेत्यारभ्य॥**

तद् ब्रह्माहमिति ब्रह्मविन्दूपनिषच्छ्रुतेः। महान्तं विभुमात्मानं मत्वा धीरो न शोचति इति कठवल्याम्। स्वानुभव गोचरत्वेन मनोगोचरत्वम्। ब्रह्मैवेदमग्र आसीदिति नारायण एवेदमग्र आसीदिति सदेव सोम्येदमग्र आसीदित्यादिभिरनेककारत्वमित्येतत्सर्वं परस्पर विरुद्धमिति चेदुच्यते। तत्र शाब्दिकाः।

**चत्वारिश्शृङ्गास्त्रयो अस्य पादाः द्वे शृङ्गे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्यांआविवेशेति॥**

ऋङ्मन्त्रं पठित्वा महान् देवः शब्दो त्रयो पादाः भूतभविष्यवर्तमानाः द्वे शीर्षे नित्यशब्दता कार्य्यं च सप्त विभक्तयो हस्ताः त्रिषु स्थानेषु बद्धः उरः कण्ठशिरस्तु शब्दरूपो बलीवर्दः मर्त्या मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्याधेयं व्याकरणमिति। तत्र विवर्णे महान् परब्रह्मस्वरूपे देवोऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इति वर्णयन्ति। भर्तृहरिणापि तथैवोक्तम्।

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते इति।**

सह युनक्तीति सयुक् सयुजो भावः सायुज्यमिति व्युत्पत्या नैक्यं शङ्कनीयं इति तत् शब्द ब्रह्म श्रीरामनामाभिन्नान्तर्यामि प्रकाशक ब्रह्मेत्येव सङ्गतम्।

**शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति इति।**
**शब्दे ब्रह्मणि निष्णातो न निस्नायात्परे यदि।**
**श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षत॥**

इति श्रुतिस्मृतिभ्यां व्याकरणस्य वाङ्मनसगोचरातीतः श्रीराम एव तात्पर्यम्। ज्योतिर्विदः

**कालः पुरुष उद्दिष्टस्तच्छक्तिः शब्द उच्यते।**
**स वेदो मन्त्रशक्तिश्च वेदाङ्गानि स एव च।**

**कालः सृजति भूतानि कालः संहरतेऽपि च॥**

**कालेन सर्वंभवति कालात्सर्वं प्रवर्तते।**
**ब्रह्मा विष्णुः शिवः शक्तिस्सूर्यो देवो महर्षयः।**
**कालरूपं न जानन्ति तत्कालो भक्षयत्यपि।**
**स एव प्रोच्यते ब्रह्म कालात्मा परमेश्वरः॥**

इति वर्णयन्ति। स श्री रामनामाभिन्नान्तर्यामि प्रकाशब्रह्मेत्येव सङ्गतम्। यः कालकालो गुणी सर्वविद्यः इति श्रुत्या, योऽसौ कृष्णः कालकालो नियन्ता कर्माध्यक्षो यज्ञभोक्तानवद्य इति स्मृत्या च ज्योतिःशास्त्रस्य मनोवचनागोचरे श्री राम एव तात्पर्यम्। तत्र सांख्याः। नित्या विम्बी च प्रकृतिः मूले मूलाभावादमूलं मूलं न परिच्छिन्नं सर्वोपादानं सर्वत्र कार्यदर्शनाद्विभुत्वमिति सूत्रेभ्यः पुरुषश्च जीवोऽनेकोऽणुः। ईश्वरो निर्विकारी विभुरेकः सच्चिदानन्दविग्रहश्चेति वर्णयन्ति। स चेश्वरो युवां न नः सुतौ। साक्षात्प्रधानपुरुषेश्वराविति भागवती स्मृत्या श्रीरामनामाभिन्नं सच्चिदानन्दरूपं ब्रह्मैवेति संगतम्। तमीश्वराणां परमं महेश्वरमित्यादि श्रुत्या सांख्यशास्त्रस्या पि मनोवचनागोचरे श्रीराम एव तात्पर्य्यम्। तत्र मीमांसकाः। अथातो धर्मजिज्ञासेत्यादिना धर्ममेव वर्णयन्ति। स च धर्मः यज्ञस्वरूपः यज्ञो वै विष्णुरिति श्रुतेः। स च विष्णुः साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सहेति श्रीमद् वाल्मीकीय रामायणात्। धर्माध्यक्षो यज्ञभोक्ताऽनवद्यो विश्वस्यात्मा फलदाता जनानामित्यादि स्मृत्या च श्री रामनामाभिन्नान्तर्यामिप्रकाश ब्रह्मैवेति सम्मतम्।

**विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज।**
**स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः॥**

इति स्मृतेः। निर्विकल्पो ब्रह्मणः परमिति श्रुत्या स्वयं नारायणो भूत्वा वैकुण्ठं याति राघवः इति रामायणीयवाक्येन च मीमांसाशास्त्रस्य मनोवचनागोचरे श्रीराम एव तात्पर्यम्। तत्र पातञ्जलाः। ईश्वर प्रणिधानाद्वा। क्लेशकर्म विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति योगसूत्राभ्यां वर्णयन्ति।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। स चेश्वरः श्रीरामनामाभिन्नं प्रकाशब्रह्मैवेति संगतम्।

**स कारणं कारणकारणाधिपो**
**न चास्य कश्चिज्जनिता न चाधिपः।**
**न तस्य कार्य्यं करणं च विद्यते**
**न तत्समश्चाभ्यधिकं च दृश्यत॥**

इति श्रुत्या पातञ्जल शास्त्रस्य मनोवचनागोचरे श्रीराम एव तात्पर्य्यम्। तत्र काणादाः। ईश्वरोपासनसहितादित्यादिना स्पष्टतया ईश्वरमेव वर्णयन्ति। स चेश्वरः श्रीरामनामाभिन्नं प्रकाशब्रह्मैवेति संगतम्। स ईश्वराणां परमो परमेश्वरः पतिः पतीनां परमं च दैवतम् इति विश्वम्भरोपनिषच्छ्रुतेः। समो न विद्यते तस्य विशिष्टः कुत एव हि। हीति श्रीमद्रामायणीयवाक्याच्च काणादशास्त्रस्यापि वाङ् मनसगोचरातीते श्रीराम एव तात्पर्यम्। तत्र गौतमाः। आत्मा द्विविधः जीवात्मा परमात्मा च। तत्र परमात्मेत्यादिना परमात्मानमेव स्पष्टतया वर्णयन्ति। स च परमात्मा श्रीरामनामाभिन्नं प्रकाश ब्रह्मैव गौतमाद्यैरनुमन्तव्य इति।

यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहेति श्रुत्या नानुमानगम्यः किन्तु–

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्॥**

इति श्रुत्वा स्वकृपयैव षष्ठशरीरं दत्वा स्वयमेव प्राप्तो भवति। तस्मात् गौतमशास्त्रस्यापि मनोवचनागोचरे श्रीराम एव तात्पर्यम्। अतः सर्वशास्त्रप्रतिपाद्यं ब्रह्मस्वरूपं तस्मात्परत्वं च श्रीरामस्येति सिद्धम्। तस्मात्तच्छास्त्रस्य प्रतिपाद्यस्य ब्रह्मणस्तत्तच्छास्त्रैरेव ज्ञातत्वात्तज्ज्ञानार्थं नेदमारब्धं किन्तु रामाभिन्नस्य। रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति इति श्रुत्या रसरूपया परया यया भक्त्या वेदान्ततात्पर्यगम्य वाङ् मनसगोचरातीतः श्रीरामः प्राप्तो भवति।

यदुक्तं निर्विकारं निरञ्जनमिति यतो वा इमानि जायन्ते इति यतो वाचो निवर्तन्ते (अप्राप्य मनसा सह) इत्यादि श्रुतिभिरपि तद् ब्रह्म निश्चेतुं न शक्यते इति चेदुच्यते। विष्ण्वाद्युत्तमदेहेषु प्रविष्टो देवताऽभवत् इति विश्वंभरोपनिषत् यो वै श्रीरामचन्द्रः स भगवान् यो ब्रह्माविष्णुरीश्वरः सर्वदेवतान्तरात्मेति श्रीरामतापनीयोपनिषदि। तस्य रूपद्वयं परिच्छिन्नमपरिच्छिन्नं च। परिच्छिन्नस्वरूपेण साकेतप्रमोदवने तिष्ठन् रासमेव करोति। द्वितीयं रूपं जगदुत्पत्यादेः कारणम्। तद्दक्षिणाङ्गात्क्षीराब्धिशायी वामाङ्गाद्रमावैकुण्ठ वासीति। हृदयात्परनारायणो वभूव चरणाभ्यां बदरिकोपवनस्थायी श्रृंगारान्नन्दनन्दन इति एवं सर्वेऽवताराः श्रीरामचरणरेखाभ्यः समुद्भवन्ति। तथाऽनन्त कोटिविष्णवश्चतुर्व्यूहाश्च समुद्भवन्ति इति विश्वम्भरोपनिषदि। यस्यांशेनैव ब्रह्मविष्णुमहेश्वराः अपि जाताः महाविष्णुर्यस्य दिव्यगुणाश्च सर्वकार्यकारणयोश्च परः परमपुरुषो रामो दाशरथिर्बभूवेत्यादि अथर्वणीय श्रुति प्रतिपाद्य जगत्कारणान्तर्य्यामिमनोवचनागोचर समस्त वेदान्त तात्पर्यैक समधिगम्य प्रकाशरूपानिर्वचनीय रहस्याधारानिर्वचनीय साकेत निवासि श्रीरामेण तादात्म्यविवक्षयैव पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते इत्यादि श्रुतिभिरुक्तम्। किञ्च नन्दनन्दनस्य सर्वाङ्गरूपत्ववर्णनेन नित्यविहार्य्याद्य श्रीराधावल्लभस्यैव श्रीरामचन्द्रेण सर्वथाऽभेद इति।

ननु प्रकाशिनोऽपि श्रीरामेति शब्दप्रतिपाद्यत्वात्कथं वाङ्मनोऽगोचरत्वमिति चेन्न। यत्पृष्टवांस्तस्य च नामरूपं लीलाऽथ धामानि तु चिन्मयानि। मनोवचोऽगोचराण्येव तानि स्वयं कृपातः स्फुरणं प्रयान्तीति श्रुतेस्तत्कृपयैवानिर्वचनीयनामरूपलीलादीनां स्फूर्तेः स्वीकारात्। श्रुत्यर्थ प्रतिपादिकायाः स्मृतेश्च। सदाशिव संहितायाम्।

**नाम चिन्तामणीरामश्चैतन्य पर विग्रहः।**
**पूर्ण शुद्धो नित्ययुक्तो न भिन्नं नामनामिनोः॥**

**अतः श्रीरामनामादि न भवेद् ग्राह्यमिन्द्रियैः।**
**स्फुरति स्वयमेवैतज्जिह्वादौ श्रवणे मुखे॥**

इति। तस्माद् वाङ्मनोग्राह्य सांकेतितरामनामादीनां साधनतस्तत्कृपयैवाऽनिर्वचनीयनामरूपादीनां स्फूर्तिरिति सिद्धम्।

ननु श्रीरामचन्द्रकृपापात्राणां रामनामाद्युच्चारणं दृश्यते तदन्येषामपि तथैवोच्चारणानि दृश्यंते इति चेच्छृणु। प्रकाशब्रह्मनामादीनि तानि सन्ति। वाङ्मनोगोचरातीत श्री रामनामादीनि तु षष्ठशरीर प्राप्त्यनन्तरं प्रकाशब्रह्मनामादिष्वेव स्फुरन्ति। ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरमिति स्मृतेः।

तद्वत्सोऽहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवमिति श्रुतेश्च। तेषां नामादीनामनिर्वचनीयत्वात् गुरुणाऽप्युपदेष्टुं न शक्यते। किन्तु प्रकाशब्रह्मनामादीन्येवोपदिश्यन्ते। शिष्योऽपि तत्साधनानुष्ठाय जानात्येव न तु वर्णयितुं शक्नोति तदुपमारहितत्वात्। तद् ब्रह्म प्रकाशिनः प्रकाश एवेत्येतदर्थम्। श्रुतिस्मृती अपि प्रतिपादयतः। यस्य भासा सर्वमिदंविभातीति। यदद्वैतं ब्रह्म यस्य तनुमिति वेदसारोपनिषदि। तनु प्रकाशभूतं च यस्य व्रह्मसनातनमिति विश्वम्भरोपनिषदि। ब्रह्मणो हि प्रतिष्ठाऽहमृतस्याव्ययस्य चेति।

**यस्य प्रभा प्रभवतो जगदण्डकोटि-**
**कोटिष्वशेषवसुधादि विभूतिभिन्नम्।**
**तद् ब्रह्मनिष्कलमनन्तमगाधवोधं**
**गोविन्दमादिपुरुषं तमहं भजामि॥**

इति च ब्रह्मसंहितायाम्।

ननूपादानान्निमित्तस्य पृथक्कारणत्वमतेऽविकारित्वं स्वतः सिद्धमेव किमित्येतावता प्रकाशप्रकाशिविचारश्रमेण उच्यते। यथा कुलालक्रियां बिना मृदैव घटोत्पत्तिर्न दृश्यते लोके तथोपादानाऽपरोक्षज्ञान चिकीर्षाकृतत्वेन निमित्तकारणास्यापि साधनकारणाकाशवत्सूक्ष्मविकारित्वं सिद्धमेव।

**ननु श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थ कोटिभिः।**
**ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः॥**

इति वचनात् द्वितीयाभावब्रह्मणोर्निर्विकारत्वं स्वत:सिद्धम्। प्रकाशप्रकाशिविचारो विफल एव। यदुच्यते यतो वा इमानि भूतानि जायन्ते इत्यादि श्रुतिभिर्द्वितीयस्य जगतो ब्रह्मण: सकाशादुत्पत्तिरित्यादि श्रूयते तद् व्यावहारिकमेव। तर्हि व्यवहाराधारो जीवस्तु भिन्न एवेति चेत् एकोऽहं बहु स्यामित्यादि ब्रह्मैव मायाशबलितत्वेन नानाव्यवहाराधारतया नानाजीवरूपेण भासमानम् न ततो भिन्नो जीव:। न च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिना माया सम्बन्ध एवासंभाव्य इति वाच्यम्। ज्ञानरूपेऽप्यात्मनि अविद्यासम्बन्धस्य शुक्तौ रजतसम्बन्धस्येव प्रतीतिसिद्धत्वे न सम्भावनोपपत्ते:। परमार्थदशायान्तु

**प्रपञ्चो यदि विद्येत निवर्तेत न संशय:।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थत:।**
**विकल्पो विनिवर्तेत कल्पितो यदि केनचित्।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते।।**

इत्यादि श्रुत्वा केवलं मनोगोचरमद्वैतं ब्रह्मैवेति चेच्छृणु।

परमार्थदशायां ब्रह्मैव चेत्। एतन्मर्त्यशरीरमतिसृज्य ब्रह्मणैव पश्यति ब्रह्मणैव जिघ्रति ब्रह्मणैव शृणोति ब्रह्मणैव गच्छतीति। आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यतीत्यादिश्रुतिस्मृतिप्रतिपादित परमार्थदशानुभव:। कस्य ब्रह्मण इति चेन्न। अप्राणो ह्यमना: सुभ्रु इत्यादिना देशकाल वस्तु परिच्छेद शून्यस्य ब्रह्मणोऽनुभवाऽसंभवात्। दर्शनादि क्रियाऽसम्भवाच्च। नन्वियमपि परमार्थदशा तुर्य्यगावस्थापर्य्यन्तैव। तुर्य्यगातीतामष्टमीभूमिकां मुक्तिरूपां सम्प्राप्तो जीव:यत्र हि द्वैतमिव भवति तदितरमितरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं विजानीयादित्यादि श्रुत्या सर्वोपधिविनिर्मुक्तेन स्वरूपेणैवावतिष्ठत इति चेन्न। मुक्तस्य विग्रहलाभ इति कठशाखोक्तश्रुत्या सोऽश्नुते सर्वान् कामान् ब्रह्मणा सह विपश्चिता। तदा विद्वान् पुण्यपापे विधूय निरञ्जन: परमं साम्यमुपैतीत्यादि श्रुत्या च विग्रह लाभ पूर्वक परमात्मना सहभोगसिद्धे:। ननु प्रपञ्चो यदि विद्येत निवर्तेत न संशय इत्यादिउक्तश्रुतीनां का गतिरिति चेच्छृणु। य आत्मनि तिष्ठन् यमात्मानं वेद यस्यात्मा शरीरं पृथिव्यां तिष्ठन् यं पृथिवी न वेद

यस्य पृथिवी शरीरम्। खं वायुमग्निं सलिलं महीञ्चेत्यादिश्रुति स्मृतिभ्यश्चे-तनाचेतनयोर्भगवद्विग्रहत्वेनैक्योपगमादुक्तश्रुतीनां न विरोधसम्भावनेति। ये चेतनाचेतनयोर्भगवद्विग्रहान्यदृष्टयः प्रपञ्चो यदि विद्येतेत्यादि पूर्वोक्तानां सर्वं खल्विदं ब्रह्म आत्मैवेदं सर्वम् इत्याद्यभेदप्रतिपादकानामपि श्रुतीनां च मुख्यार्थाऽन्यथार्थकल्पनां कुर्वन्ति ते कुर्वन्तु नाम परन्तु पृथगात्मानं प्रेरयितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति सत्य आत्मा सत्यो जीवः भिदा सत्यं भिदेति। सोऽश्नुते सर्वान् कामान् ब्रह्मणा सह विपश्चितेत्यादि यथा श्रुतार्थभेदप्रतिपादकवाक्यानि विरुद्धानि भवेयुः। अस्मन्मते तु जडत्वजी-वत्वादिना भेदस्याप्युपगमाद्भेदवचनान्यप्यविरुद्धान्येव। न चेमानि श्रुतिवाक्यानि व्यवहारकभेदपराणीति वाच्यम्। एकस्मिन्नेव वेदे कस्यचिद्भेदवाक्यस्य व्यावहारिकतया मिथ्यार्थप्रतिपादकत्वेन कस्यचिद्भेदवाक्यस्य पारमार्थिकतया सत्यार्थ प्रतिपादकत्वेन च वैषम्येनासमञ्जसत्वेन प्रमाणाभावात्। तस्माद् वेदवाक्यानां भगवन्निःश्वास रूपत्वात् शब्दब्रह्मत्वाच्च व्यावहारिकत्वकल्पनं तुच्छतरमेव। किञ्च निर्विशेषाद्वैतज्ञानमेव नोत्पत्तुमर्हति। भेद ग्राहि प्रत्यक्षानुमानागमविरोधात्। न चाद्वैतागम एवाद्वैतं बोधयतीति वाच्यं अद्वैतवचनस्य विग्रहविग्रह्यभेदपरतयोपपन्नत्वेन निर्विशेषाद्वैतपरत्वासिद्धेः। यत्त्वं मन्यसे प्रपञ्चस्त्वनादिरेव यस्य निर्विशेषाद्वैतंज्ञानं तस्यैव प्रपञ्चमिथ्यात्वेन निर्विशेषाद्वैतं ब्रह्मैव सत्यमिति इत्येतत्प्रकारकमद्वैतज्ञानं न यथार्थं सर्वसाधारणत्वाभावात्तव मते जीवाभावाच्चान्येषामज्ञानां प्रपञ्चस्य विद्यमानत्वादद्वैतज्ञानं भ्रमात्मकमेवेति। स्वमते चिदचिद्विग्रहत्वं तु सर्वसाधारणम्। येषां चिदचिद्विग्रहस्य भगवतो ज्ञानं नास्ते तेषामेवार्थं वेदान्तशास्त्रोपदेशः। सत्य आत्मा सत्यो जीवः सत्यंभिदा सत्यंभिदेति भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णःपरो जीवसंघो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययञ्च बन्धान्मोक्षं तत एवाभिवाञ्छेदित्यादिभेद प्रतिपादक श्रुतीनां आत्मैवेदं सर्वमित्याद्यभेद प्रतिपादकश्रुतीनाञ्च चिदचिद्विग्रहत्वेन सर्व साधारणत्वात्सर्वसामञ्जस्यम्। तद्योऽहं सोऽसौ योऽसौ सोऽहमिति ब्रह्माहमस्मीत्यादीनामपि तादात्म्यात् विग्रहविग्रह्यभेदेनैव सामञ्जस्यम्। तस्मादस्माकं ज्ञानं तु लोके वेदे चा ऽ विरुद्धमेव। काश्चिच्छ्रु तयश्चिदचिद्विग्रहं

वर्णयन्ति। काश्चित्प्रकाशरूपमन्तर्य्यामिनं वर्णयन्ति काश्चिद्यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहेत्यादि श्रुतय: प्रकाशिनं सूचयन्ति। इत्येवं प्रकाशि श्रीरामविग्रहितद्विग्रह: तत्प्रकाशप्रतिपादकत्वेन सर्वे वेदा: यत्पदमामनन्ति इति श्रुतिप्रामाण्यात् सर्वाणि वाक्यानि पारमार्थिकान्येवेति। किञ्च जीवस्याज्ञान निवृत्तये तव मते तत्वमस्यादि वाक्यैरथातो व्रह्मजिज्ञासेत्यादि सूत्रैश्चोपदेशोऽनुपपन्न: ब्रह्मातिरिक्तस्य जीवस्याभावात्। ब्रह्मैव स्वगताज्ञान निवृत्यै स्वात्मानमुपदिशतीति महत्परिहासास्पदम्।

तस्माच्चेतनाचेतनयोर्भगवद्विग्रहत्वेनैक्यतया प्रतिपादनं तु सज्जनानां समञ्जसमेव। तथा च। मनोमय: प्राण: शरीरो भारूप: सत्यकाम: सत्यसङ्कल्प:। आकाशात्मा सर्वगन्ध: सर्वरस इति। श्रुति प्रतिपाद्य श्रीरामप्रकाशरूपब्रह्मज्ञानमन्तरा जीव: संसारान्न मुच्यते। तद्विचारस्तु सदेव सोम्येदमग्र आसीदिति यतो वा इमानि भूतानि जायन्ते इत्यादि श्रुतिभ्यो वाच्यवृत्यैवाधिगतत्वादथातो ब्रह्म जिज्ञासेति शास्त्रारम्भोऽनुपपन्न एवेति। अत: तात्पर्यवृत्या ब्रह्मार्थानुसन्धेयो मनोवचनागोचर प्रकाशी साकारनिराकारातीत: श्रीराम एवेति निर्णयाय शास्त्रारम्भ: इति निश्चीयते। साकारनिराकारातीतत्वं तु अपाणिपादो जवनो गृहीतेत्यादि श्रुति प्रामाण्यात्। तथा च साकारे अपाणिपादत्वस्य निराकारे जवनग्रहीतृत्वस्य च विरुद्धत्वात्। रसो वै स: रसं ह्येवायं लब्ध्वानंदी भवतीति श्रुति प्रतिपादिते उभयाङ्गिनि रसरूपे श्रीरामे उभयं नो विरुद्धमिति।

ननूक्तश्रुत्या साकारनिराकारातीतत्वं रसरूपत्वं च सिद्धं तथापि वचनागोचरत्वं कथमिति चेदुच्यते। प्राकृतरसस्यैव मनोविषयत्वम्। श्रीराम रूपस्य तु षष्ठशरीरप्राप्तिमन्तरोपलब्धिर्न भवतीति वाङ्मनोगोचरातीतत्व मेव यतो वाचो निवर्तन्त इत्यादिश्रुते:। तस्य विचार: तात्पर्यवृत्या ब्रह्मविचारेणैव कर्तव्य इति फलितोऽर्थ:। तस्माद्यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति आदिश्रुतयो मनोवचनागोचरं प्रकाशिनं सूचयन्ति। सत्यं ज्ञानमनन्तं ब्रह्मेति। सदेव सोम्येदमग्र आसीदित्यादिश्रुतयस्तत्प्रकाशं मनोऽनुभवगोचरं जगत्कारणं श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्म वर्णयन्ति। तस्माज्जगत्कारण

श्रीरामनामाभिन्नप्रकाशब्रह्मज्ञानात् चिदचिद्विग्रहत्वेन सर्वं ब्रह्मेति भावनया मताभिमानिनिरसन पूर्वक भेदनिवृत्या राधा मन्त्र प्राप्त प्रेम्णा सहैवार्थज्ञानपूर्वक श्रीराममन्त्रजपात् यत्र हि द्वैतमिव भवति तदितर इतरंपश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं विजानीयादिति श्रुत्युक्तचिन्मात्रस्वरूप प्राप्ति दशायां मुक्तस्य विग्रहलाभ इति श्रुति प्रामाण्यात् विग्रहं दत्वा मनोवचनागोचर प्रकाशि श्रीराम: स्वयं स्फुरति। अत: प्रथमं श्री रामनामाभिन्न ब्रह्मविचार: कर्तव्य एवेति।

**इममेव परं मन्त्रं ब्रह्मरुद्रादिदेवता:।**
**ऋषयश्च महात्मानो मुक्ता जप्त्वा भवाम्बुधे:।।**

इति हारीतस्मृत्या–

**यस्य प्रसादाद्देवेशि मम सामर्थ्यमीदृशम्।**
**संहरामि क्षणादेव त्रैलोक्यं सचराचरम्।**
**धाता सृजति भूतानि विष्णुर्धारयते जगत्।**
**न तस्य दुर्लभं किंचिद्यस्य कर्णे मनूत्तम:।**

इति सिद्ध सारस्वततन्त्रोक्तवाक्येन च श्री रामोपासक: महादेव:। तदवतार: शङ्कराचार्य्यो मदभीष्टमिममेवार्थं साधनचतुष्टयसम्पत्यनन्तरं तद्यथेह कर्मजितो लोक: क्षीयते एवमेवामुत्र पुण्यजितो लोक:क्षीयत इत्यादि श्रुत्या काम्यकर्मण: क्षयिष्णुत्वादत: ब्रह्मविचार: कर्तव्य: इत्यादिना प्रत्यपादयत्। ननु स्वमते जगत: भगवच्चिदचिद्विग्रहत्वेन सत्य आत्मा सत्यो जीव: सत्यं भिदा सत्यं भिदेत्यादिपैङ्गिश्रुत्या सत्यत्वमुक्तम्। शङ्करमते तु यथास्मृति रूप: परत्र पूर्वदृष्टावभासोऽध्यास: स्मर्यत इतिस्मृति: सत्यरजतादि: तस्य रूपमिव रूपमस्येति स्मृतिरूप: स्मर्यमाणसदृशस्तथाहं ममेदमित्ययमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्यारूप: कर्तृत्वभोक्तृत्वप्रवर्तक: सर्वलोक प्रत्यक्षोऽस्यानर्थहेतो: प्रहाणायात्मैकत्व विद्याप्रतिपत्तये वेदान्तशास्त्रारम्भ इति कथं स्वमते शङ्करमतस्यानुकूलत्वमिति चेदुच्यते। शङ्कराचार्यस्य नाभेदे तात्पर्यम्। किन्तु सर्वस्य जगत: भगवच्चिदचिद्विग्रहरूपैकत्वे तात्पर्य्यम्।

तदन्योऽहं ममादिरूपोऽध्यास एव तस्यैव मिथ्यात्वम्।

**रामः सत्यं परं ब्रह्म रामात्किञ्चिन्न विद्यते।**
**तस्माद्रामस्वरूपोऽयं सत्यं सत्यमिदंजगदिति**
**सनत्कुमार संहितायाम्।**
**खं वायुमग्निं सलिलं महीं च**
**ज्योतींषि सत्वानि दिशो द्रुमादीन्।**
**सरित् समुद्रांश्च हरेः शरीरं**
**यत्किञ्च भूतं प्रणमेदनन्यः।**

इति भागवतीयस्मृतेश्च। यदि जीवब्रह्मणोर्वा वास्तवाभेद एवेति मन्ये तर्हि जीवाज्ञानेन ब्रह्मणोऽज्ञत्व प्रसक्तिस्तथा च यः सर्वज्ञः सर्ववित्। सत्यं ज्ञानमनन्तं ब्रह्मेति। कर्मक्षये याति स तत्वतोऽन्यः इति। पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति। ममैवांशो जीवलोके जीवभूतः सनातन इति श्रुतिस्मृति विरोधःस्यात्।

ननु यावद् भेदज्ञानं तावदेव जीवभावः। निवृत्तेभेदे परमार्थदशायां जीवस्य ब्रह्मैक्यमेवेति शङ्कराचार्यमतमिति चेत्तर्हि भेदव्यपदेशाच्चान्य इत्यादिसूत्रेषु स्वकीय सकलभाष्ये शङ्कराचार्य्यकृतभेदवर्णनमसंगतं स्यात्। किञ्चानावृत्तिःशब्दादनावृत्तिःशब्दादिति वेदान्तचरमसूत्रे स्वभाष्यान्ते परमार्थ-दशायां नाड़ीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन यथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति यस्मिन्नरश्च वैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो-दिवि। यस्मिन्नैरं मदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिंश्च प्रभुमितं हिरण्मयं वेश्म यश्चानेकधा मन्त्रार्थवादादि प्रदेशेषु प्रपञ्च्यते तं प्राप्य न चन्द्रलोकादिवत् भुक्तभोगा आवर्तन्ते। कुतस्तथोर्द्धमापन्नोऽमृतत्वमेति। तेषां न पुनरावृत्तिरिति स्वग्रन्थविरोधश्च स्यात्। तस्मादुक्तरीत्यैव शङ्कराचार्यभाष्यार्थ-वर्णनं सङ्गतमिति। अपुनरावृत्तेः साकेतलोक गमनादेव सिद्धान्तितत्वाद्। अन्यथा ब्रह्मणोऽज्ञत्वापत्तिर्दुर्वारैवेति। शङ्कराचार्यस्यापि तात्पर्येणापराजिताख्य साकेत लोके वाङ्मनोगोचरातीत श्री रामचन्द्रप्राप्तिरेवात्यन्तिकी मुक्तिरित्येव तत्वमिति। तद् गूढाशयमजानन्तोऽन्ये पण्डितमानिनोऽसङ्गतमन्यथार्थं वर्णयन्ति।

**मध्वो ब्रह्मा शिवो विष्णुर्निम्बार्कः सनकस्तथा।**
**शेषो रामानुजो रामो रामानन्दो भविष्यतीति॥**

भार्गव पुराणोक्तवाक्यात् एते चत्वारो ऽप्याचार्याः मदुक्त श्रीरामपरत्वाभिप्रायेणैव सूत्रार्थं वर्णयन्ति स्म। ये केचिद् भिदं मन्यन्ते तेषां मतं चिदचिदोस्तादात्म्यमभ्युपगच्छतामस्माकमनुकूलमेव। ये केचित् सविशेषमभेदं मन्यन्ते तेषां मतं एकस्यैवेश्वरस्य चिदचिद् विग्रहत्वेनानुकूलमेव। ये चान्तर्य्यामिनं य आत्मनि तिष्ठन् यः पृथिव्यां तिष्ठन्नित्यादिश्रुतेश्चिदचिद्विशिष्टं मन्यन्ते तेषामपि मतं अन्तर्यामिनश्चिदचिद्विग्रहकत्ववादिनार्थमस्माक-मनुकूलमेव।

ननु ब्रह्मकृष्णविष्णुनारायणादिनाम्ना सूत्रार्थान् वर्णयन्ति कथं रामनामाभिन्नप्रकाशब्रह्मण एव वर्णनमिति चेच्छृणु। ब्रह्म कृष्णविष्णुनाराय-णादीनि नामानि श्रीरामस्यैवेति संगत एव। भृगुर्वैवारुणिर्वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। सोऽब्रवीद्राम एव परं ब्रह्म न तस्मादन्यत्र किञ्चन इति तैत्तिरीये।

**इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते।**
**रामः सत्यं परं ब्रह्म रामात्किंचन्न विद्यते॥**

इति सनत्कुमार संहितायाम्।

**कृषिर्भूवाचकः शद्बो णश्च निर्वृतिवाचकः।**
**तयोरैक्यं परब्रह्म कृष्ण इत्यभिधीयते॥**

इति श्रुतिः।

**रामस्य गुणरूपं च लीलाधाम परात्परम्।**
**एतच्चतुष्टयं नित्यं सच्चिदानन्द विग्रहम्।**

इति वशिष्ठ संहितायाम्। कृष्णश्चैव वृहब्दालः इति श्री मद्रामायणे ब्रह्मस्तुतौ।

**विश्वाधारं महाविष्णुं नारायणमनामयम्।**
**पूर्णानन्दैकविज्ञानं परं ज्योतिस्वरूपिणम्।**
**मनसा संस्मरन् ब्रह्मा तुष्टाव परमेश्वरम्।**

इति रामोपनिषादि। सर्वाणि नामानि यमाविशन्ति इत्यादि श्रुति स्मृतिभ्य: मदुक्तार्थानुकूलमेव ते सूत्रार्थं प्रतिपादितवन्त:। अन्यथोक्त: श्रुतिस्मृतिविरोधस्तेषां तदवस्थ एव स्यात्। किञ्च

**अन्यथा सन्तमात्मानमन्यथा प्रतिपाद्यते।**
**किं तेन न कृतं पापं चौरेणात्मापहारिणेति॥**

श्रुत्योक्तश्रुतीनामन्यथार्थ कर्तरि दोषो दुर्वार एव स्यात्। अनेकेश्वरत्वापत्तिश्च स्यात्। अतो मदुक्तरीत्यैव सर्वं संगतम्। तत्वद्वयं तिष्ठति चेत्थमेकं चित्तत्वमन्यं न पदार्थजातमिति वेदसारोपनिषच्छ्रुते:। चित्याचित्योर्न तृतीयमीक्ष्येऽपेक्षणादुभयमिति शाण्डिल्यसूत्राभ्यां च जीवेश्वररूपं चित्तत्वमेकं चेत्यं कर्म स्वभावरूपमेकं तत्वम्। तत्र माया चेतनाचेतन रूपेण द्विधा। चेतनायाश्चित्तत्वे ऽन्तर्भाव:। अचेतनाया अचित्तत्वे ऽन्तर्भाव:। एवंविद्वत्तत्वम्। य आत्मनि तिष्ठन् य: पृथिव्यां तिष्ठन्नित्यादि श्रुते:। एवं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन्। सरित्समुद्रांश्च हरे: शरीरमिति स्मृतेश्च।

जीवजडयो: विग्रहत्वं श्रीरामनामाभिन्न प्रकाशब्रह्मणो विग्रहित्वं च मत्वा श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्म जिज्ञासा कर्तव्येत्यर्थ: फलति।

ननु अन्तर्याम्यन्तर्यामिप्रकाशब्रह्म तृतीयं तत्वमिति कथमुच्यते तत्वद्वयमिति चेदुच्यते।

यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादि श्रुत्या वाङ् मनोगोचरातीत श्रुतितात्पर्य्यगम्य श्रीरामचंद्रस्य तत्वातीतत्वमेव। किञ्च श्रीरामनामाभिन्नान्तर्य्यामि प्रकाश ब्रह्मण: श्रुति तात्पर्यगम्य प्रकाशि श्रीरामचन्द्रेण तादात्म्यान्न शङ्कनीयम्। तस्मादिदं द्वैतमतमङ्गीकृत्य श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्म जिज्ञासा कर्तव्या अयमेवार्थ: सर्वेषामविरुद्ध: इति दिक्।

श्रीरामचन्द्रस्वरूपवर्णनन्तु कर्तुमेव न शक्यते तस्य वाङ्मनो गोचरातीतत्वात् तत्स्वरूपं सूच्यते एव। तत्प्रकाशब्रह्मजिज्ञासा कर्तव्येत्युक्तम्।

(प्रथम सूत्रस्य भाष्यं समाप्तम्)

# श्री राधावल्लभीयमत प्रकाशकं सूत्रभाष्यम्

**जन्माद्यस्य यतः॥१॥१॥२॥**

तत्र कियल्लक्षणं ब्रह्मेत्यत आह भगवान् सूत्रकारः जन्माद्यस्य यतः॥2॥ अस्य जगतश्चतुर्दशभुवनगर्भकानन्तब्रह्माण्डात्मकस्य मनसाऽप्यचिन्त्यरचनारूपस्य वृद्धिपरिणामापक्षयात्मकस्य जन्मादि यतः परमकारणाद्भवति तच्छ्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्मेति शेषः। जन्म चात्र प्रादुर्भाव इति धातु स्मरणात्। न हि जगतोऽनादित्वेन स्वभावतः उत्पत्यादि सम्भावयितुं शक्यम्। असाधारणा निदेशकालनिमित्तानि। तेषां स्वर्गार्थिभिर्धान्यार्थिभिश्चोपायादीयमानत्वात्। अतः कार्यस्य जगतः कारणानपेक्षत्वं न युक्तम्। अनपेक्षत्वं धान्यार्थिनां भूतिशेषे वर्षादिकाले बीजादिनिमित्ते च प्रवृत्तिर्न स्यात्। न च दूर्वादिकं भुवि पर्वतादिषु च तृणादिकं स्वभावतः एवोत्पद्यते इति वाच्यम्। ऊषरभूमौ दूर्वादेःपर्वते शिलासु च तृणादेःकारणाभावे नोत्पत्तिदर्शनात्।

ननु यत्कार्यं तत् सकर्तृकमेतद् व्याप्तिज्ञानमेव जगति पक्षे कर्तारं साधयत्सर्वज्ञं संसारव्यतिरिक्तं श्रीरामनामाभिन्नमीश्वरं साधयति। एवमुपादानमप्यनुमानेन सिद्धयति। किं यतो वा इमानि भूतानि इति श्रुत्येति चेन्न। यत्कार्ये तदचेतनोपादानकं कार्य्यत्वात्। अङ्कुरवदित्यनुमानेन यत्कार्य्यं तत्सकर्तृकं कार्य्यत्वात्। घटवदित्यनुमानेन यत्कार्य्यं तदभिन्ननिमित्तोपादानकं कार्यत्वात्। सुखादिवदित्यनुमानेन वा न ब्रह्मणः निमित्तत्वोपादानत्वमुभयं निश्चेतुं शक्यं तर्काप्रष्ठिानात्। वीजाङ्कुरवदित्यनेनानुमानेन चेतनाभिन्नस्य बीजादेः घटवदचेतनत्वनियमाब्दीजादन्यः कारणं नास्त्येवेति। चेतनातिरिक्त-

कारणनिश्चयात्। तस्मादतीन्द्रिये ब्रह्मणि श्रुतिरेव शरणं श्रुत्यर्थसम्भाव-नार्थत्वेनानुमानं युक्तिमात्रं न स्वतन्त्रमिति मन्तव्यम्। तथा च वेदान्त वाक्य ग्रथनार्थत्वात्सूत्राणां वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्य्यन्ते तन्त्वौपनिषदमिति श्रुतेः। तर्ह्यनुमानं सर्वथा वेदान्तशास्त्रे किमनुपेक्षितमेवेति चेन्न। सत्सु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तत्तात्पर्यार्थग्रहणदार्ढ्यानुमानमपि वेदान्तवाक्याऽविरोधि प्रमाणमेव। न विचार्य्यते कस्मात् श्रुत्यैव तर्कस्याभ्युपेतत्वात्।

श्रुत्यर्थस्तर्केण सम्भावनीय इत्यर्थिका श्रोतव्यो मन्तव्यो इति हि श्रुतिः। गौतमाद्यैरनुमन्तव्यः इत्यादिश्रुतिश्च। यथा कश्चिद् गान्धारदेशेभ्य-श्चौरैरन्यत्रारण्ये वद्धनेत्र एव त्यक्तः केनचिद् दयालुना मुक्तस्वरूपं तदुक्तमार्गग्रहणमसमर्थः पण्डितस्तर्ककुशलो मेधावी स्वदेशानेव प्राप्नुयात्। एवमेवेहानाद्यविद्याकामादिभिर्वेदान्ततात्पर्यैकसमधिगम्य श्रीरामांशोऽहमहमिति स्वरूपाज्ञानेन ब्रह्मप्रकाशात्प्रच्युतोऽस्मि गहने संसारे पतितः केनचिद् दयापरिवशेनाचार्य्येणोपदिष्टस्स्वात्मस्वरूपः स्वयं तर्ककुशलश्चेत्स्वरूपं जानीयादित्यर्थिका पण्डितो मेधावी गान्धारानेवोपपद्यते एवमेवेहाचार्य्यवान् पुरुषो वेदेतिश्रुतिरात्मनः पुरुषवुद्ध्यनुरूपतर्कोपेक्षां दर्शयति। अतो न शब्दप्रमाणातिरिक्त प्रमाणान्तर विषयत्वं ब्रह्मण इति तत्वम्।

यदि जीवः श्रीरामलोकात्प्रच्युत इत्युच्येत न स पुनरावर्तते इति श्रुत्या यद् गत्वा न निवर्तन्ते तद्धाम परमं ममेति भगवद्वाक्यात् यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेरिति पद्मपुराणीय स्मृत्या च तल्लो-कात्प्रच्युतेरभावादिति। यदि च ब्रह्मप्रकाशात् प्रच्यवेत इत्युच्येत तन्न। तस्य ब्रह्मप्रकाशस्य सर्वत्र व्यापकत्वेन ततोऽपि प्रच्युतेरसम्भवात्। तस्माच्छ्री रामप्रकाशब्रह्मणि महाप्रलये लीनानां जीवसमूहानां स्वेन स्वेनाण्डचिन्मात्रस्वरूपेण स्थितानां सिंहोऽहं वराहोऽहं इत्यादि ज्ञान विधुराणां ब्रह्मदासाः ब्रह्मकितवाः इति श्रुत्या आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर इति पद्मपुराणीयस्मृत्या च श्रीरामदासोऽहमिति स्वस्वरूपज्ञानाभावहेतुना पूर्ववासनाबलेन च नानाज्ञान संकुल संसाराटव्यां प्रच्युतिस्सम्भवितैव।

नन्वनादिमायया सुप्तो यदा जीवः उद्बुध्य अजमनिद्रमस्वप्नमद्वैतं वुद्ध्यते तदेति श्रुत्याऽस्य जीवस्यानादिवद्धत्व प्रतिपादनात् आत्मदास्यं हरेः स्वाम्यं स्वभावं सदा स्मरेति सदा दास्यस्मरणेन विरोध इति चेन्न। ममैवांशो जीवलोकः जीवभूतः सनातनइति गीतावाक्यात् श्रीरामांशत्वेन सदा दास्यसम्भवात्।

**नन्वपराजितप्रकाशं यद्ब्रह्म कोटिसमप्रभम्।**
**तत्र माया च शुद्धानां जीवानां निकुरुबकम्।**
**तिष्ठतो जीव वृन्दं च चुक्षुभेऽजाप्रसंगतः॥**

इति वेदसारोपनिषत्प्रमाणात् लोकप्रकाशात्प्रच्युतानां जीवानां ज्ञानोत्तरं तत्रैव गमनं सम्भवतीति चेच्छृणु ब्रह्मापि सन् ब्रह्माप्येतीति श्रुत्या।

**सिद्धा ब्रह्म सुखे मग्ना दैत्याश्च हरिणाहताः।**
**तज्ज्योतिर्भेदने शक्ताः रसिकाः हरिवेदिनः॥**

इति शिवसंहितावाक्यात्।

शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति श्रुत्या 'शब्दे ब्रह्मणि निस्नातो न निस्नायात् परे यदि। श्रमस्तस्य श्रमफलोह्यधेनुमिव रक्षत' इति भागवतात् रामलोकप्रकाशब्रह्म प्राप्य तदनन्तरं अनिर्वचनीयश्रीलोकं प्राप्नोतीत्यनवद्यम्। किं पुनस्तद्वेदान्तवाक्यं सत्सूत्रेण विचारयितुमिष्टमिति जिज्ञासायां यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति अन्योन्यमप्येवं जातीयकसाखान्तरीयवाक्यानि सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेत्यादीनि सर्वज्ञस्य ब्रह्मणः स्वरूपलक्षण प्रतिपादकान्युदाहर्तव्यानीति।

ननु देशकालवस्तु परिच्छेदशून्यस्य सर्वनियन्तुः सर्वाश्रयस्याविकारिणो ब्रह्मणो यतो वा इमानि भूतानि जायन्त इति जगत्कारणत्वं चेत्तर्हि विकारित्वापत्तेः निर्विकारं निरञ्जनमिति श्रुतिविरोधः स्यादिति कथं जन्माद्यस्य यत इति ब्रह्मलक्षणमुपपद्यत इति चेदुच्यते। सदेव सोम्येदमग्र आसीदित्युपक्रम्य

श्रूयते तदैक्षत एकोऽहं बहु स्यामिति व्यापनशीले सर्वत्र परिपूर्णे सर्वज्ञे परमात्मनि प्रकाशब्रह्मणि रामाज्ञानमायावृतानां सर्वाज्ञान विमूढानां भक्तिसाधनदेहोपकरणरहितानां समष्ट्यात्मना स्थितानां भक्त्या तल्लोकावाप्तिरस्त्विति जीवानामुपरि कृपया वाङ्मनोगोचरातीत श्रीराम प्रेरणया तच्छ्रीरामनामाभिन्न प्रकाशःब्रह्मेतीच्छामकरोदेकोऽहं तदन्तर्य्यामि रूपेण बहु स्यामिति ब्रह्मान्तर्य्यामि वाङ्मनोगोचरातीत श्रीरामचन्द्रप्रतिपादिका श्रीरामतायनीयश्रुतिः। यो वै श्रीरामचन्द्रः स भगवान् यश्च सच्चिदानन्दैक रसं प्रकाशब्रह्म तस्यान्तर्यामीत्यर्थः। यश्च सच्चिदानन्दाद्वैतैकरसात्मेतिकृपा प्रतिपादिका विष्णुपुराणोक्तस्मृतिरपि।

**सर्वभूतेषु लीनेषु जीव एव सनातने।**
**जीवे च विष्णुमापन्ने वासनाभिस्समावृते॥**

**कार्यदेहादिरहिते एकत्वं समुपागते।**
**सर्वज्ञानविमूढ़े च कृपा काऽप्युपजायते॥**

विष्णुस्सर्वत्र पूर्णस्य सर्वज्ञस्य परात्मन इति श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्म जीवेष्वन्तर्यामिरूपेण नानाभवतीति।

इममर्थं श्रुतिरपि प्रतिपादयति अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। अनेन जीवेनात्मा जीवान्तर्यामिरूपेण नामरूपेऽहं व्याकरवाणीत्यर्थः। अन्यथा यः आत्मनि तिष्ठन् यमात्मा न वेद यस्यात्मा शरीरमिति श्रुतिर्व्याकुरुते। अनेन जीवात्मनेति तृतीया निर्देशश्चासंगतःस्यात्। "जीवाद्भवन्तिभूतानि जीवे तिष्ठन्त्यचंचलाः। जीवे तु लयमिच्छन्ति न जीवात्कारणं परम्।।" इति श्रुतेश्च व्याकुप्येत। तस्मात् समष्टिजीवान् व्यष्टीकृत्वा प्रतिजीवान्तर्यामितया ब्रह्मणो बहुभवनमिति सिद्धम्। अन्यथा न चतुरस्रम्। प्रमाणाभावात्। तस्मादपराजित प्रकाशं यद्गुह्यकोटिसमप्रभमिति ब्रह्मणो हि प्रतिष्ठाहमिति तत्प्रकाशिस्वरूप मनोवचनगोचरसमस्तवेदान्ततात्पर्य्या-वधिर्निर्विकारः श्रीसीतारामचन्द्रः मनोवचनगोचरस्वरूपभिन्नानिर्वचनीय सच्चिदानन्दनामरूप लीलाधामगुणसंपन्नः परिच्छिन्नापरिच्छिन्न सगुणनिर्गुणातीते

मनोवचनागोचरातिप्रियरहस्यलीलासंपन्ने मनोवचनागोचरातिप्रियसाकेताख्ये निर्विकार एव तिष्ठतीति निश्चेतव्यम्।

तदूर्ध्वं स्वयमाभाति गोलोकः प्रकृतेः परः इति सदाशिव संहितायाम्। वृन्दावनं रजो वन्दे यत्र स्युः विष्णुकोटयः इतिपद्मपुराणीय वृन्दावन माहात्म्ये। सच्चिदानन्दात्मको भगवान् सच्चिदानन्दात्मिकास्य व्यक्तिः।

**अयोध्या नगरी नित्या सच्चिदानन्दरूपिणीति।**
**रामस्य गुणरूपंच लीलाधाम परात्परम्।**
**एतच्चतुष्टयं नित्यं सच्चिदानन्दविग्रहादिति।**
**यत्र वृक्षलतागुल्मपत्रपुष्पफलादिकम्।**
**यत्किञ्चित्पक्षि भृंगादि तत्सर्वं भाति चिन्मयमित्यादिभ्यः।**

ननु सच्चिदानन्दात्मको भगवान् सच्चिदानन्दात्मिकाऽस्य व्यक्तिरित्यादिभिः प्रकाशि प्रतिपादनात् कथमनिर्वचनीयत्वं तस्येति चेदुच्यते। अनिर्वचनीय श्रीरामस्यानिर्वचनीयनामादि यथारूपेणास्ते तथा वर्णयितुं न शक्नुवंति अपि तु शाखाचन्द्रन्यायेन सूचयन्ति। सच्चिदानन्द रामनामादीनामुपायोपेय प्राप्यप्रापकरूपत्वात्। यथा परा वागेव पश्यन्ती मध्यमावैखरी रूपेण परिणमते पुनः प्रतिलोमक्रमेणानिर्वचनीयपरारूपा भवति। तथा रामनामादीनामनिर्वचनीयत्वमुपायोपेयरूपत्वञ्च। तथा हि। सितोपल मधुरता रसाल मधुद्राक्षेक्षुरसवद् वक्तुमशक्येति। सितोपलमधुरता तद्भोक्तुरेव संवेद्यान्येषां मनोवचनागोचरैव। तथा रामनामधामादीनां स्फूर्तिस्तस्यैव यस्य मुक्तावस्थानन्तरं श्रीरामः स्वकृपया सख्यादि निजचिन्मय विग्रहं दत्वा तैरिन्द्रियैर्नाम रूपलीलादि दर्शयति। षष्ठशरीर प्राप्त्यनंतरम् एवं रीत्यैव तद्विष्णोः परमं पदम् सदा पश्यन्ति सूरयः। इत्यादि श्रुतयश्चानुकूलाः।

**आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति।**
**गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेदिति**
**महाकौर्म स्मृतिश्च॥**

एवं बह्व्यः श्रुतिस्मृतयः सन्ति। मुक्तस्य विग्रहलाभ इति श्रुत्या मुक्त्यनन्तरं मुक्तस्य सखीरूपता भवतीत्यर्थः। शुको मुक्तो वा वामदेव इत्युपवृंहणरूपा आख्यायिका पद्मपुराणे विस्तरेण प्रसिद्धा। तथाहि।

**तमुवाच प्रिया रूपं लब्धवन्तं शुकं हरिः।**
**त्वं मे प्रियतमा भद्रे सदा तिष्ठ ममांतिके।।** इति गीतायाञ्च

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महावाहो ययेदं धार्यते जगत्।।**

इति स्त्रीलिङ्गनिर्देशाज्जीवस्य सखीरूपता नित्यसिद्धैव। परन्त्वनादि रामनामाज्ञानरूप मायातिरोहिता मुक्तावस्थानन्तरं मनोवचनगोचरप्रकाशि श्रीरामप्रसादलब्धनित्यसिद्धैव स्वसखीरूपता स्फूर्तिः। एतेन परकीयावादिनामपि मतं निरस्तम्। तस्मात् प्रकाशब्रह्मण एवान्तर्यामितया दिव्यादिव्यजगत्कर्तृत्वं स्वतःसिद्धम्। मनोवचनागोचर निर्विकार श्रीरामस्यापि जगत्कर्तृकत्वमिति फलितम्। तत्तादात्म्येनैव प्रकाशब्रह्मणो निर्विकारत्वं च सिद्धम्। एतत्सर्वं जगत्कारणब्रह्मविचारादवगतम्। तथा च यतोऽस्य विश्वस्य जन्मादि तच्छ्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मेति फलितोऽर्थः।

(द्वितीय सूत्रस्य भाष्यं समाप्तम्)

# श्रीराधावल्लभीयमत प्रकाशकं
# ब्रह्मसूत्रभाष्यम्

### अध्यायः १ पादः १ सूत्रम् ३

### शास्त्रयोनित्वात् ॥१॥१॥३॥

ननु श्रीरामचन्द्रप्रकाशिब्रह्मणः श्रुतितात्पर्यविषयत्वेनैव मनोवचनागोचरत्वं सिद्धमेव। प्रकाशरूपान्तर्यामिब्रह्मणो मनोवचनागोचरत्वे तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्योपनिषत्प्रतिपाद्यत्वं न स्यात्। उपनिषत्प्रतिपाद्यत्वे यतो वाचो निवतन्तेऽप्राप्य मनसा सहेति वचनगोचरत्वं च न स्यात्। यदि यतो वाचो निवर्तन्ते इति वाक्यं प्रकाशिपरं तं त्वौपनिषदं पुरुषं पृच्छामीति प्रकाशपरं इति समाधीयेत तर्हि ब्रह्मद्वयं स्यात्तदा एकमेवाद्वितीयमिति श्रुतिविरोधः स्यादित्याशंक्याह भगवान् सूत्रकारः शास्त्रयोनित्वात्। ॥३॥ अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इत्यादि श्रुत्या सर्वार्थप्रकाशस्य ऋग्वेदादिशास्त्रस्य व्रह्मयोनिकत्वात् ब्रह्मकारणकत्वादुभयं नो विरुद्ध्यते। तथा हि। कोऽद्धा वेद यत आबभूव इत्यादि श्रुतिवाक्येन कार्य्यं हि साकल्येन स्वकारणं न जानाति। यदि जानाति चेत् पुत्रस्तर्हि पित्रोः सकाशादेव एवं प्रकाश ब्रह्म वेदानुत्पाद्य स्वोक्त्यैव स्वयं प्रतिपादितं भवति। अतः प्रकाशब्रह्मणोऽपि मनोवचनागोचरत्वं सिद्धं चेत्तर्हि सर्वथामनोवचनागोचरनामरूपादिसहितस्य श्रुति तात्पर्य्यावधिप्रकाशिब्रह्मणः श्रीसीतारामस्य सुतरां मनोवचनागोचरत्वं सिद्धमिति।

अन्तर्याम्यन्तर्यामि श्रुतितात्पर्यगम्यवाङ्मनोगोचरातीतनित्यरास विहारिप्रकाशि श्रीरामचन्द्रं साक्षाद्वक्तुं वेदोऽपि न शक्नोति। क इत्था वेद यत्र स अथात आदेशो नेति नेति इत्यादि श्रुतेः।

**ननु रकाराज्जायते ब्रह्मा रकाराज्जायते हरिः।**
**रकाराज्जायते शम्भू रकारात्सर्वशक्तयः॥**

**आदावन्ते तथामध्ये रकारे सुप्रतिष्ठितम्।**
**विश्वं चराचरं सर्वमवकाशेन नित्यशः।**
**यथाकरण्डे रत्नानि गुप्तान्यज्ञैर्नदृश्यते।**
**तद्वन्मन्त्राश्च वेदाश्च रकारे सुव्यवस्थिताः।**

इति पुलह संहितावाक्यात्। साधन रूपरामनामैकदेशस्थ इत्यस्य वेदकारणत्वं सुप्रसिद्धम्। कथं ब्रह्मणो वेदकारणत्वमिति चेदुच्यते। वेदान्तदेवस्तारकं ब्रह्म व्याचष्टे इति।

**राम एव परं ब्रह्म राम एव परं तपः।**
**राम एव परं तत्वं श्रीरामो ब्रह्मतारकमिति॥**

**रमन्ते योगिनो यस्मिन् सत्यानन्दे चिदात्मनि।**
**इति रामपदेनाऽसौ परं ब्रह्माभिधीयते॥**

इति श्रुतिभ्यः। रकारो रामचन्द्रश्च सच्चिदानन्दविग्रह इत्यगस्त्यसंहितावाक्यात्।

**रामित्येकाक्षरं ब्रह्म कारणं प्रणवस्य च।**
**तस्माद् ब्रह्मा हरिः शम्भुर्योगिनः समुपासते॥**

इतिगुणोपवृंहणवाक्याच्च तयोरभेदप्रतिपादनेन विरोधानवकाश इति। रामनाम्नो वेद कारणत्वं केन प्रकारेण इति चेदुच्यते। कश्यपः पश्यको भवतीति वैदिकव्युपत्तिवत्। रामनामैकदेश इत्यस्य वर्णविपर्य्ययेण रलयोरै-क्यादल इति। तस्मात्प्रत्याहाराश्रयेण वर्णसमाम्नायपरिग्रहः। वेदानां वेद इति छान्दोग्यश्रुत्या वर्णसमाम्नायस्य वेदोपादानं सुप्रसिद्धम्।

ब्रह्मणोऽपि अग्न्यत्वादग्निनामासाविति मध्वीयऋग्भाष्याच्च मनोमयः प्राणशरीरो भारूपः इत्यादि श्रुत्या ब्रह्मणोऽपि प्रकाशरूपत्वाभ्युपगमादुभ-योरैक्यमिति।

**अग्ने यशस्विन् यशसे समर्पयेन्द्रावतीमुपाचितीमिहावह ।**
**अयं मूर्ध्ना परमेष्ठी सुवर्च्चाः समानानां तमश्लोकोऽस्त्विति तैत्तिरीयश्रुतेः॥**

अग्निशब्द वाच्यत्वात् रेफस्य अग्नि वीजत्वेन प्रकाशरूपत्वात्।

**कृषिर्भूवाचको शब्दो णश्च निर्वृतिवाचकः।**
**तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते॥**

इति श्रुत्या रामब्रह्ममूलकृष्णनाम्नामेकार्थत्वेभेदः। साधनभूत श्रीरामनाम्ना वाङ्मनसगोचरातीत श्रुतितात्पर्यगम्य श्रीरामचन्द्रस्य सूचितत्वेन रकारो रामचन्द्रश्च सच्चिदानन्द विग्रहः इत्यगस्त्यसंहिता वाक्ये नैक्याद् ब्रह्मद्वयशङ्काऽपि निरस्ता। श्रीराम परब्रह्म कृष्णनाम्नावाङ्मनोगोचरातीत श्रीरामसूचकत्वेन यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतिर्वाक्य संलग्नमेव श्रीरामनाम श्रीरामचन्द्र सूचकं स्वजापकं श्रीरामचन्दं प्रापयतीति। तथा हि स्मृतिः।

**इममेव परं मन्त्रं ब्रह्म रुद्रादि देवताः।**
**ऋषयश्च महात्मानो मुक्ता जप्त्वा भवाम्बुधेरिति।**

ननु वेदस्य ब्रह्मकारणत्वेन लौकिकग्रन्थवद्पौरुषेयता स्यादतो ब्रह्मणो वेदहेतुता नास्तीति चेच्छृणु। वेदो रामनाम्नोऽर्थ एव। रामनामै- कदेश इत्यस्माद् प्रादुर्भावस्योक्तत्वात्।

ततश्च लौकिकग्रन्थवद्वेदस्य न पौरुषेयता शब्दार्थवन्नामवेदयोरभेदां गीकारात्। तथा च श्रीरामानामाभिन्नान्तर्य्यामि प्रकाशब्रह्मणः सकाशात् यदा प्रपञ्चोपत्तिस्तदा वेदरूप रामनामार्थस्य प्रादुर्भाव एव न चोत्पत्तिरैतावानेव वेदस्य रामनाम्नश्च जन्यजनकभाव सम्बन्धः।

**यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः।**
**तथैव रामबीजस्थं जगदेतच्चराचरमिति** श्रीरामतापनीयवाक्यात्।

**बीजे यथा स्थितो वृक्षः शाखापल्लव संयुतः।**
**तथैव सर्ववेदा हि वकारे सुव्यवस्थिताः॥**

इति पुलहसंहितावाक्याच्च। रामनाम्नि वेदस्वरूपार्थस्य सदा विद्यमानत्वान्नित्यत्वमेव। रामनाम्नो वेदशास्त्र रामायणपुराण सर्वमन्त्रादि प्रादुर्भावो मदीयराममंत्रार्थे द्रष्टव्यः। तस्मात् तन्त्वौपनिषदं पुरुषं पृच्छामि यतो वाचो निवर्तन्ते इत्यादि श्रुतीनां परस्परविरोधः वेदस्य पौरुषेयता नाशश्च शास्त्रयोनित्वादिति सूत्रेण परिहृतः।

(तृतीय सूत्रस्य भाष्यं समाप्तम्)

# श्री राधावल्लभीयमत प्रकाशकं
# ब्रह्मसूत्र-भाष्यम्

### अध्यायः १ पादः १ सूत्रम् ४

### तत्तु समन्वयात् ।।१।।१।।४।।

ननु तन्त्वौपनिषदं पुरुषं पृच्छामि यतो वाचो निवर्त्तते इत्यादि श्रुतीनां विरोधं परिहृत्योपनिषत्प्रतिपाद्यत्वं ब्रह्मणः साधितम्। तत्कथं संगच्छते। आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामित्यादि जैमिनिसूत्रात् वेदस्य क्रियापरत्वान्न सिद्धे वस्तुनि विधिर्भवति विधेः क्रियाविषयत्वात्। ततश्च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि वेदान्तवाक्यानां न ब्रह्मपरत्वम् किन्तु सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीत इत्यादि विधिवाक्यशेषतया क्रियापरत्वम्। तस्मात् क्रियाविशेषणतया वेदान्तानां ब्रह्मपरत्वं स्वतो न इत्याशंक्याह तत्तु समन्वयादिति।।४।।

तद्ब्रह्म सर्वज्ञं सर्वशक्ति वेदान्तशास्त्रादेवावगम्यते कथं समन्वयात्। उपक्रमादिलिङ्गैः परोक्षप्रिया इव हि देवा इति श्रुतेरुपवृंहण रूपायाः। परोक्षवादो वेदोऽयं परोक्षं मम च प्रियमिति स्मृत्या च वेदान्तानां अखण्डैकरसे मनोवचनागोचरे प्रकाशि ब्रह्मणि श्रीरामचन्द्रे तात्पर्य्यनिश्चयादित्यर्थः।

नन्वेवं जैमिनि सूत्रस्य का गतिरिति चेद्वाच्यार्थपरिमित यैवोपपत्तिरितिग्रहणात्तथा च। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। आत्मा वा इदमेकमेवाग्र आसीत्। तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्। अयमात्मा ब्रह्म। सर्वखल्विदं ब्रह्मेत्यादि श्रुतयः प्रकाशब्रह्मणश्चिदचिद्विग्रहत्वेनान्तर्य्यामितया सर्वत्र परिपूर्णस्योपासनां प्रदर्श्य।

**राम एव परं ब्रह्म राम एव परं तपः।**
**राम एव परं तत्वं श्रीरामो ब्रह्मतारकमिति॥**

श्रीरामोपनिषच्छ्रुत्या मनोवचनागोचर नामरूपलीलाधामगुणवति प्रकाशिनि श्रीरामचन्द्रे तात्पर्य्येणान्विताः।

ननु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि श्रुतीनां का गतिरिति चेच्छृणु। कर्मप्रतिपादिकाः श्रुतयः कर्म कर्तृणां यागादिकर्मसु प्रवृत्तिं विधाय कर्म्मकर्तृणामन्तः करणशुद्धिद्वारा सत्सङ्गेन ब्रह्म जिज्ञासामुत्पादयन्ति। तया ब्रह्मजिज्ञासया सर्वत्र ब्रह्मोपासनां कुर्वन्ति। निवृत्तभेदं जिज्ञासुं राधामन्त्रस्मरणोत्पन्नप्रेम संहितार्थानुसन्धानपूर्वक श्रीराममन्त्रस्मरणात् जाग्रत्स्वप्न सुषुप्तितुरीयतुर्य्यातीतावस्था विश्वतैजस प्राज्ञब्रह्म शुद्धजीवात्मदेवताक स्थूल सूक्ष्मकारणमहाकारण कैवल्याख्य शरीर पञ्चकान्तर्गत शरीरचतुष्टयनाशे सति तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः इति। प्रसीदत्यच्युतस्तस्मिन्प्रसादे क्लेशसंक्षय इति श्रुति स्मृति प्रामाण्यात् श्रीरामः षष्ठं नित्यं स्वशक्तिरूपं सख्यादि विग्रहं प्रदाय स्वयं स्फुरति।

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति।**
**यत्पृष्टवांस्तस्य च नामरूपं लीलाऽथ धामानि तु चिन्मयानि।**
**मनोवचोऽगोचराण्येव तानि स्वयं कृपातः स्फुरणं प्रयान्तीति।**
**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।**
**सोऽश्नुते सर्वान् कामान् ब्रह्मणा सह विपश्चितेति।**
**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इति।**

एतन्मर्त्यशरीरमतिसृज्य ब्रह्मणैव पश्यति ब्रह्मणैव जिघ्रति ब्रह्मणैव श्रृणोतीत्यादि श्रुति स्मृतिभ्यां तस्माद् श्रुतयो विधिविशेषमन्तरा मनोवचनागोचरे श्रीरामं तात्पर्येणन्विताः। एतेन वेदान्तवाक्यानां विधिशेषत्वमपास्तम्। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि श्रुतीनां मदुक्ततात्पर्यानङ्गीकारे तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते। अक्षय्यं ह

वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यनयोर्विरोधो दुर्वार एव स्यात्। तस्मात्काम्यकर्मफलस्य नित्यत्वं निष्कामचातुर्मास्यादिकर्मणामन्तः शुद्धिद्वा-राऽक्षयफलत्वम् तस्मादेकस्योभयत्वे संयोग पृथक्त्वमिति जैमिनि सूत्रात् कर्मणां नित्यानित्यत्वमिति।

ननु हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीदिति। एको ह वै नारायण आसीन्न ब्रह्मा नेशान्नो नापो नाग्निसोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यः। स एकाकी एव। तस्मादाकाशादीनि इति महोपनिषत्। भोगाय मनो यदा शेते रुद्रस्तदा संहार्यन्ते प्रजाः उच्छ्वसितेन तमो भवति तमसा आपः इत्यादि रुद्रोपनिषच्च। सहस्रशीर्षा पुरुष इत्युपक्रम्य ततो विराडजायतेत्यादि पुरुषसूक्तमिति। अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजा जनयन्तीं सरूपामिति। सृष्टिस्थितिविनाशानां हेतुभूते सनातने इत्यादि श्रुतिस्मृतयः ब्रह्मविष्णु महेशदेवी गणेश सूर्य्य भैरवेन्द्रादीनां जगत्कारणत्वं प्रतिपादयन्ति तासां कथं श्रीरामनामाभिन्नब्रह्मण्येव समन्वय इति चेत्सत्यम्।

देवानां पूरयोध्या। तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषावृतो वैतां यो वेद ब्रह्मणोऽमृतेनावृतां पुरीं। तस्मै व्रह्म च व्रह्मा च आयुःकीर्तिं प्रजां ददुरिति तैत्तिरीयश्रुतिप्रसिद्धायामयोध्यायामेते सर्वे देवाः केचिद् भिन्नांशाः नारायणादयः केचिद् भिन्नांशाः रुद्रादयः स्व स्वांशिरूपेण श्री रामाज्ञोन्मुखास्तिष्ठन्ति। अनन्त कोटि ब्रह्माण्डेषु यं ब्रह्माण्डं रचयितुं यं देवं श्रीरामआज्ञापयति स देवः स्वांशेनावतीर्य तानि तानि ब्रह्माण्डानि रचयति पालयति संहरति इत्यभिप्रायेणानेकेश्वराणां जगत्कारणवादः संगच्छते। श्रीरामाज्ञावशवर्तिनोंऽशिनो देवास्तिष्ठन्तीति वेदसारोपनिषदि। शिवसंहितायां चैवमेवास्पष्टम्।

**तत्रैव रामचन्द्रस्य आवर्णस्था हि देवताः।**
**रामभद्राज्ञया सर्वाः रूपान्तरमुपागताः।**
**हिरण्यगर्भः पुरुषः द्वारा लोकेषु चासते।**
**हिरण्यगर्भः पुरुषस्तु इच्छां चक्रे प्रजेच्छया।**
**एकोऽहं बहुतां जायां तद्विराडुदपद्यत।**

**द्विविधः सोऽभवत्तत्र श्रीमन्नारायणो विभुः।**
**क्षीरार्णवं समासाद्य शयनं कृतवांस्ततः।**
**तन्नाभिकमलादासीद् ब्रह्मा विश्वसृजां पतिः।**
**स च संभावत्येतां सृष्टिं जङ्गमतस्थुषामिति।**
**आसीनस्तमयोध्यायां सहस्रस्तंभमण्डिते।**
**मण्डपे रत्नसंज्ञे च जानक्या सह राघवम्।**
**मत्स्यकूर्मौ किरिर्नैको नारसिंहोऽप्यनेकधा।**
**वैकुण्ठोऽपि हयग्रीवः हरिःकेशव वामनौ।**
**यज्ञो नारायणो धर्मपुत्रो नरवरोऽपि च।**
**देवकीनन्दनः कृष्णो वसुदेवो बलोऽपि च।**
**पृश्निगर्भो मधून्माथी गोविन्दो माधवोऽपि च।**
**वासुदेवो परोऽनन्तः सङ्कर्षण इरापतिः।**
**प्रद्युम्नोऽप्यनिरुद्धश्च व्यूहाः सर्वेऽपि सर्वदा।**
**रामं सदोपतिष्ठन्ते रामादेशे व्यवस्थिताः।**
**एतैरन्यैश्च संसेव्यो रामनामा महेश्वरः।**
**तेषामैश्वर्यदातृत्वाद्रामोऽपीशःनिरीश्वरः।**
**इन्द्रनामा स इन्द्राणां पतिः साक्षी गतिः प्रभुः।**
**विष्णुः स्वयं स विष्णूनां पतिर्वेदान्तकृद्विभुः।**
**ब्रह्मा स ब्रह्मणां कर्ता प्रजापतिपतिर्गतिः।**
**रुद्राणां स पतिःरुद्रो रुद्रकोटि नियामकः।**
**चन्द्रादित्यसहस्त्राणि रुद्रकोटिशतानि च।**
**अवतारसहस्त्राणि शक्तिकोटिशतानि च।**
**ब्रह्म कोटिसहस्त्राणि दुर्गाकोटिशतानि च।**
**महाभैरवकालादि कोट्यर्बुदशतानि च।**
**गंधर्वाणां सहस्त्राणि देवकोटिशतानि च।**
**सभां यस्य निषेवन्ते स श्रीराम इतीरित इति।**

ननु सर्वेश्वराणां जगत्कर्तृणां वाङ्मनोगोचरातीतलोकनिवासिनां श्रीरामाज्ञावशवर्तिनां मनोवचनागोचराणां स्वतोभिन्नानां प्रतिपादकानि

श्रुतिस्मृतिवाक्यानि कथं तात्पर्यवृत्या वाङ्मनोगोचरातीते श्रीरामे समन्वितानि इति चेदुच्यते।

अयोध्यावासिनस्सर्वे जगन्नाथस्य मूर्तयइति वसिष्ठसंहितावाक्यात्। श्रीरामेण सह तल्लोकनिवासिनामभेदप्रतिपादनान्नोक्तदोष इति। एते ब्रह्माण्डान्तर्वर्तिनो न भवन्ति किन्तु तदंशिन एवेति। यतस्सर्वेषा मवताराणामवतारिणां च जगत्कारणेश्वराणां श्रुतिस्मृतिपुराणसंहितादिषु एकमेव परमंधाम एक एव परमेश्वरः एक एव सर्वमुक्तप्राप्यः श्रूयते। तच्च परम परतमं धाम अयोध्यैव। स च परमपरमेश्वरः श्रीराम एव।

**अयोध्या नगरी नित्या सच्चिदानन्दरूपिणी।**
**यस्यांशेनैव गोलोक वैकुण्ठाद्या प्रतिष्ठिताः।**

इतिवसिष्ठ संहितायाम्।

**स कारणं वै करणाधिपाधिपो**
**न चास्य कश्चिज्जनिता न चाधिपः।**
**न तस्य कार्यं करणं च विद्यते,**
**न तत्समश्चाभ्यधिकश्च दृश्यते।।**

**तमीश्वराणां परमं महेश्वरमिति श्वेताश्वतरोपनिषच्छ्रुतेः।**
**परान्नारायणाच्चैव कृष्णात्परतरादपि।**
**यो वै परतमः श्रीमान् रामो दाशरथिः स्वराट्।**

इतिवसिष्ठ संहितास्मृतेश्च।

किञ्च जीवानां मुक्तावस्थायां स्वरूपप्राप्त्यनन्तरं छान्दोग्योपनिषदि चरमाध्यायपठितमपरजिताख्यं मुक्तानां परमंप्राप्य स्थानमयोध्यैव। तत्रापि रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवतीत्यादिश्रुत्या रस एव रास इतिरासमण्डलं परममुक्तप्राप्यं परम परतममेवेति। न च रसस्य वचन गोचरत्वमिति वाच्यम। यथा यतो वाचो निवर्तन्ते इति श्रुतिः सूचयति। तथा रसो वै सः इति श्रुतिरपि रस इति साङ्केतितनाम्ना तस्य रसस्य सूचितत्वात्।

एवं श्रुति स्मृति प्रतिपादितं पूर्णब्रह्मरूपं यथाऽपराख्यस्थानं न तथा स्थानान्तरम्। तथा हि। अथ य एष सं प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपं संपद्यते स्वेन रूपेणाभिनिष्पद्यत इत्युपक्रम्य अरश्च वैंण्यश्चार्णवौ ब्रह्म लोके तृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थस्सोमसवनस्तदपराजिता पूर्वब्रह्मण प्रभुमितं हिरण्मयं तद्य एवैतावदेव च वैण्यश्चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारी भवतीति।

तदपराजितानामनगर्य्याः वचन गोचरत्वमागतामिति न शङ्कनीयम्। अपराजितेत्यादिवचनैः सूचितत्वोपगमात्। तस्माच्छ्रीरामनामाभिन्न प्रकाशब्रह्मणः प्रतिपादकत्वेन साकल्येन मनोवचनागोचरे धाम्नि प्रकाशिनि रासविहारिणि श्रीरामे च श्रुतिस्मृतयस्तात्पर्येण समन्विता इति सिद्धम्।

ननु कस्य पदस्य कस्मिन्नर्थे तात्पर्यमिति चेदुच्यते। श्रुतौ तृतीयस्यां दिवीत्यनेन गोलोक साकेतान्तर्वर्त्याकाशो ज्ञेयों यतोऽसौ त्रिविधः। एको ब्रह्माण्डान्तर्वर्ती द्वितीयश्चैतन्याकाशस्तृतीयो गोलोकान्तर्वर्तीति। अपराजिता नाम नगर्ययोध्यैवेति।

अपराजितेत्यनेन तात्पर्यवृत्या कर्मज्ञानोपासनाभिर्ज्ञातुमशक्येति सूचितम्। तत्रार्ण्यसंज्ञकौ समुद्रौ स्तः। ब्रह्मलोकस्तु साकेत एवेति। सुरामयं सार इत्यनेन श्रीरामस्य विहारस्थलं रासमण्डलं तात्पर्यवृत्या व्यञ्जितम्। अवश्त्थ इत्यनेन कल्पवृक्षस्तात्पर्य वृत्या सूचितमिति वृक्षराजत्वात्। अनयैव दिशा सर्वत्र तात्पर्यस्वरूम् ज्ञेयम्।

ननु वेदे तात्पर्य्यवृत्या रासमण्डलं सूचितमित्युक्तम्। पुराण संहितादिषु तु वाच्यवृत्यैव रासमण्डलमुच्यते। तत्कथं तात्पर्यविषयत्वं रासस्येति चेच्छृणु। मुनिभिर्वेदतात्पर्यार्थत्वेनैव पुराणसंहितादीनां प्रकाशितत्वान्न दोषः।

ननु तर्हि वाच्यार्थं त्वागतमेवेति चेदुच्यते तद्रासमण्डलस्याानुपमत्वात्। सितामधुरतायाः द्राक्षादिवद्वर्णनं कर्तुमशक्यं यथा तद्वद् रासमण्डलमपि

वर्णयितुं न शक्यते किन्तु मुनिभिर्वर्णनेन तत्सूच्यत एव। सितामधुरता तद्भोक्तुरेव संवेद्या। तथा षष्ठशरीर प्राप्त्यनन्तरं यो रासमण्डलं प्राप्नोति स एव वाङ्मनोगोचरातीत रासमण्डलं यथातथ्यतोजानाति नान्य इति। तस्माद् वाच्यवृत्या च चिदचिद्विग्रहानन्दस्वरूप श्रीरामनामाभिन्ने जगत्कारणप्रकाशब्रह्मणि मनोवचनागोचरे प्रकाशिनि श्रीरामे च श्रुतिस्मृतीनां वाच्यवृत्या तात्पर्यवृत्या च समन्वय इत्युक्तम्।

(इति चतुः सूत्री भाष्यम्)

तत्र केचिज्जीव प्रधान परमाणु शून्यादिषु जगत्कारणत्वेन श्रुतिस्समन्वय इति मन्यन्ते तन्नेत्याह भगवान्सूत्रकारः।

**ईक्षतेर्नाशब्दम् ।।५।।**

अशब्दं जगत्कारण शब्दप्रतिपाद्यं जीवशून्यपरमाणु मायाकाल कर्म स्वभावादि जगत्कारणं न भवति यस्मादशब्दं जगत्कारणमादि शब्दा प्रतिपाद्यं तत् अशब्दं तं। कुतः ईक्षतेः तदैक्षत बहु स्यां प्रजाये इत्यादि सृष्टि प्रतिपादकश्रुतौ श्रीरामनामाभिन्न प्रकाश ब्रह्मावतारस्तस्य बहुभवनेक्षण संभवात् ब्रह्मणः। ईक्षितृत्वेन शब्द प्रतिपाद्यत्वश्रवणात् ननु मायाकाल कर्म स्वभावादीनां शब्द प्रतिपाद्यत्वेपि जड़त्वान्न स्वतः जगत्कारणत्वं **जीवाद्भवन्ति भूतानि जीवे तिष्ठंत्यचंचला। जीवे तु लयमिच्छन्ति न जीवात्कारणं परं** इति श्रुत्या केवलं जीवस्य जगत्कर्तृत्वं प्राप्तं अणुत्वान्न संभवति अनेन जीवात्मनानु प्रविश्य नामरूपे व्याकरवाणीति **कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः यत्प्रसादादिमे सन्ति न सन्ति तदुपेक्षयेतिश्रुति** स्मृतिभ्यां जीवस्य जीवजडयोः स्वतः कर्तृत्वासंभवात्। जीवाद्भवन्ति भूतानीत्युक्तश्रुतेः का गतिरिति चेदुच्यते। परमात्माधीनकर्तृत्वमादाय श्रुतिगत्युपपत्तेः। तदायत्त तद्वर्तिकत्वात्तस्य कर्तृत्वमिति जन्माद्यस्य इति सूत्रे तदैक्षत एकोऽहं बहु स्यामिति श्रुत्यर्थावसरे प्रकाशब्रह्मणि एव जीवान्तर्य्यामि रूपेण बहुभवनस्योक्तत्वात् न जीवस्य कर्तृत्वमिति। ननु निष्कलंनिष्क्रियं शान्तं निरवद्यं निरञ्जनमिति निरीहं च निराकारं निर्विकारं निरञ्जनमिति श्रुतिस्मृतिभ्यां श्रीरामनामाभिन्न ब्रह्मणो निःक्रियंनिरंजनं निराकारत्वादिना कथं जगत्कारणत्वमिति चेदुच्यते। **अकर्तृत्वात्प्रपंचस्य निःष्क्रियं मां वदन्ति हि माया गुणैर्यतो मेंऽशाः कुर्वन्ति सर्जनादिकं न करोमि स्वयं किञ्चित्सृष्ट्यादिकमहं शिव इत्यादि पाद्मवचनात्।** जीवमायादि द्वारा ब्रह्मणो जगत्कर्तृत्वे न निःकलं निष्क्रियं निरंजनमित्यादि न विरुद्ध्यते इति परे व्यये सर्व एकीभवतीत्यादि श्रुत्या श्रीरामाज्ञा न युक्ता जीवा प्रलये समष्ट्यात्मना प्रकाशब्रह्मण्येकी भूय तिष्ठन्ति ततः सृष्टि समये तदैक्षत बहु स्यामिति श्रुत्या तत्तज्जीववासनानुसारेणेच्छामकरोत्। ततश्च तदेव ब्रह्मव्यष्ट्यात्मना नानारूपेण स्थितानां शरीराण्यास्थाय स्वयमेव माया परिमोहितः

सन् अन्तर्य्यामि रूपेण सर्वं करोति स एव माया परिमोहितात्मा शरीरमास्थाय करोति सर्वम्। इति श्रुतेः। चिदचिच्छरीरमास्थाय सर्वं करोति वस्तुतो ब्रह्मणो न माया परिमोहितत्वं किंतु तत्तज्जीव वासनानुसारेणेच्छामकरोदत एव श्रुतौ मायया परिमोहितात्मेत्युच्यते किंच जीवस्य किंचित्काराणुचैतन्यस्य चैतन्यं स्वचैतन्ये वर्द्धयित्वा कार्य्याकारण समर्थं च कृत्वा यत्र यत्रायं गच्छति तत्र तत्रानेन सह मायया मोहित इव स्वचैतन्येन सह स्वयमपि गच्छति। अयं मम कदाचिदपि संमुखो भवेच्चेत्तर्हि संसारादुद्धारं कुर्यामित्यनेन ब्रह्मणोऽपि कारुण्यं ध्वनितं जीवस्य चातिमूढ़त्वं ध्वनितं प्रलये प्रकाशब्रह्मणि सुषुप्तमिव मुग्धं जीवं दृष्ट्वा करुणार्तहृदयः श्रीरामचन्द्रः प्रकाशब्रह्म प्रेरयति तत्प्रकाशब्रह्म जीवान्तर्यामितया तच्चैतन्यं वर्द्धयति तत्रेश्वरस्याय-मभिप्रायः मम संमुखो भूत्वा मां प्राप्नुयादिति अयं तु संसारसंमुखः सन् वैषयिक कार्यकारणसमर्थो भूत्वा संसारे पतति ननु सत्यसंकल्पस्य परमात्मनः एवमिच्छा चेत् सर्वेषामुद्धारः कुतो न स्यादिति चेदुच्यते ईश्वरस्य कर्तुमकर्तुमन्यथाकर्तुं शक्तत्वेऽपि साधनापेक्षत्वान्नाति प्रसंगः। ननु श्रीरामनामाभिन्न ब्रह्मणः सदेव सौम्येदमग्र आसीदिति सद्रूपत्वं एको ह वै नारायण आसीदिति चतुर्भुजत्वं यो वै भूमा तत्सुखं नाल्पे सुखमित्यष्ट-भुजत्वमिति बहुरूपत्वाश्रवणादनवस्थया ब्रह्मणः स्वयं निश्चेतुं न शक्यते अतः चिन्मयस्य द्वयस्य निः कलस्याशरीरिणः उपासकानां कार्य्यार्थं ब्रह्मणे रूपकल्पनेति श्रुत्या ब्रह्मणः सर्वरूपाणां काल्पनिकत्वेन निराकारत्वमिति चेदुच्यते एको देवः सर्वभूतेषु गूढ़ः सर्वव्यापी सर्वभूतान्तरात्मा निर्गुणश्चेति सहस्त्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति।

**यत्किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थितिः॥** इति।

अंगुष्ठमात्रः पुरुषों मध्य आत्मनि तिष्ठति इति। यस्य भासा सर्वमिदं विभातीति श्रुतिभ्यः श्रीरामनामाभिन्न ब्रह्मणे निराकारसाकारादि नित्यसर्वरूपत्वेन उपासकानां कार्य्यार्थं ब्रह्मणे रूपकल्पनेति श्रुत्युक्त काल्पनिकत्वं रूपाणां न संभवति उपासकानां कार्य्यार्थं ब्रह्मणे रूपकल्पनेत्युक्त

श्रुते: का गतिरिति चेदुत्यते। प्रलये लीनानां जीवानां श्रीरामाज्ञान-विधुराणामुपासनप्रतिपत्तये प्रकाशि प्रेरणया श्रीरामनामाभिन्न ब्रह्मण:रूपकल्पना सर्वान्तर्यामिरूपेण जीवजडयोरन्तरे नानारूप कल्पनेति अथवा ब्रह्मणे रूप कल्पना इत्यस्य–

**शंखचक्रधरं देवं द्विभुजं पीतवाससम्।**

**आरम्भकर्मणां विप्र पुण्डरीके स्मरेद्धरि**मिति स्मृते: मुखं किमस्यासीत्किंबाहू किमूरू पादा उच्येते ब्राह्मणोऽस्य मुखमासीब्दाहू राजन्य: इत्यादि पुरुषसूक्तात् आत्मा वा इदमेक एवाग्र आसीत् पुरुष विधइति तैत्तरीयश्रुतेश्च। श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्मणोऽपि द्विभुजत्वमेव तस्माच्चिन्मयस्याद्वितीयस्य समाधिरहितस्य निष्कलस्य मायागन्धिरहित-स्याशरीरिण: प्राक्तनशरीररहितस्य श्रीरामनामाभिन्नान्तर्यामि प्रकाश ब्रह्मण: द्विभुजस्य रूपकल्पना चतुर्भुजाष्टभुजमत्स्यादि रूपकल्पना उपासकानां कार्य्यार्थं इत्यर्थ:। नन्वेवं रूपाणां काल्पनिकत्वं तदवस्थमेवेति चेदुच्यते। साकेत लोके श्रीरामाज्ञोन्मुखतया स्थितानि वैकुण्ठादिषु च यानि रूपाणि तानि श्रीरामनामाभिन्नान्तर्य्यामि प्रकाश ब्रह्मण एव रूपाणि तस्मात्सर्वेषां रूपाणां नित्यत्वं यदा यत्र श्रीरामाज्ञाभवति तदा तत्र उपासकानां कार्य्यार्थं प्रकाशब्रह्म उपासकेषु तत्तदुपासकाभीष्टं रूपं प्रकटयति द्विभुजाधीनत्वात् द्विभुजस्यैव रूपाणीत्युच्यते तस्मादुक्तश्रीरामनामाभिन्नब्रह्मस्वरूपाणां शब्दप्रतिपाद्यानां परमद्विभुजरूपेण।

**स्थूलं चाष्टभुजं प्रोक्तं सूक्ष्मं चैव चतुर्भुजं।**
**परं तु द्विभुजं रूपं तस्मादेतत्त्रयं यजेत्॥**

इत्यानंदसंहितोक्त वाक्य प्रामाण्येन तत्वतो भेदात् शब्द प्रतिपाद्यत्वं परंपरया ईक्षितृत्वं च संगतमिति परंतु वाङ्मनोगोचरातीतप्रकाशिना प्रकाश ब्रह्मणस्तादात्म्यात् प्रकाश ब्रह्मणोनिर्विकारत्वं श्रीरामनामाभिन्नपरमानन्दाद्वैतब्रह्मणि वाङ्मनोगोचरातीत श्रीरामस्यान्तर्य्यामित्वे प्रमाणम् यो वै श्रीरामचन्द्र: स भगवानद्वैत परमानन्दात्मेति रामतापनीय श्रुति:। यदुक्तं प्रधानादिजगत्कारणं न ईक्षितृत्वश्रवणादिति तदसंगतम् तत्तेज ऐक्षत ता आप ऐक्षंत इतिवद

चेतनेऽपि प्रधानादौ चेतनवदुपचार दर्शनात्तदसंगतम्। किं च यदुक्तं यतो वा इमानि भूतानि जायन्ते इत्यादिना ब्रह्मण: कर्तृत्वं निष्कलनि: क्रियं शान्तं निरवद्यं यदि प्रकाशं ब्रह्म निरंजनमित्यादिना अकर्तृत्वं वेदे श्रूयते इति तत्रालौकिककर्तृत्वे न लौकिककर्तृत्वस्य बाधो युक्त: ईक्षितृत्वं तु पूर्वोक्तजीवमायादिद्वाराजगत्कर्तृत्वे न श्रीरामनामाभिन्नब्रह्मण: ईक्षितृत्वं न स्वत: प्राप्तं अपि च यदुक्तं वाच्यत्वेनेक्षित: पुरुष: सगुणोऽस्तु तत्र गृहीतशक्तयो वेदा: शब्दे पूर्णेऽव्यये लक्षणया पर्यवस्येयुरिति किं यदि श्रुतितात्पर्यविषयप्रकाशि यदि श्रुतितात्पर्य विषय प्रकाशि श्रीरामब्रह्म प्रेरणया श्रीरामनामाभिन्नब्रह्मण: ईक्षितृत्व जगत्कर्तृत्वादिकं चेत्तर्हि सर्वे तद्गता: दोषा: प्रकाशिनि श्रीरामे प्राप्नुयुरिति आशंकायामाह भगवान् सूत्रकार:।।

**गौणश्चेन्नात्मशब्दात् ।।६।।**

प्रधानादौ श्रीरामनामाभिन्ने ब्रह्मणि गौणमीक्षणं इति चेन्न आत्मशब्दात् आत्मा वा इदमेक एवाग्र आसीदिति स ऐक्षत अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इत्यादि सर्व वेदान्तेषुश्रीरामनामाभिन्न ब्रह्मवाचकत्वेनैवात्मशब्द: प्रसिद्ध: तस्यैव जगत्कर्तृत्वमीक्षितृत्वं च मुख्यमेव कारणं यदुक्तप्रकाशिनि ब्रह्मणि दोषप्राप्तिरिति तन्न। तत्तज्जीववासनानुसारेणेच्छामकरोदित्युक्तत्वात्। यद्यपि **कर्तृत्वं कारणत्वं च स्वभावश्चेतना धृति:। यत्प्रसादादिमे सन्ति न सन्ति तदुपेक्षये**ति श्रुत्या जीवानां कर्तृत्वभोक्तृत्वादिकमीश्वरप्रेरणयैव तथापि–

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिसस्वजाते।**
**तयोरन्य: पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकसीति।।**

श्रुत्युक्त्या जीव एव भोक्तृत्वं नेश्वरे तथा सूर्य्यो यथा सर्व लोकदु:खेन वाह्य इति काठकश्रुत्या श्रीरामनामाभिन्नान्तर्य्यामि आत्मवच्च ब्रह्मण: प्रेरकत्वेऽपि दोषालिप्तत्वात् सगुणनिर्गुणात्परस्मिन् वाङ्मनोगोचरातीत श्रीरामे कुतो दोष संभावनेति जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुत्या प्रधानस्य जगत्कर्तृत्वं जीवेशयो: एवाभासेनैव न

तु स्वतः जडत्वात् यद्युच्येत् अचेतनेऽप्यात्मशब्दः ममात्मभद्रसेनः भूतात्मा इन्द्रियात्म्येत्यादि प्रयोगदर्शनात् कथमात्मशब्दस्य गौणत्वमिति तत्राह भवान् सूत्रकारः–

**तन्निष्ठस्य मोक्षोपदेशात् ॥७॥**

एष त आत्मान्तर्य्याम्यमृत इति श्रुत्या श्रीरामनामाभिन्नात्मशब्द वाच्य जगत्कारणब्रह्मज्ञानेन मोक्षकथनान्नात्मशब्दो गौणो भवितुमर्हतीत्यर्थः श्रीरामः स्वसखी रूपविग्रहं प्रदाय स्व समीपं प्रापयतीति प्रथम सूत्रे उक्तं मुक्तानां परमं प्राप्यं स्थानमयोध्यैवेति। तत्तु समन्वयादित्यत्र उक्तं तस्माच्छ्रीरामनामाभिन्ने ब्रह्मण्येवात्मशब्दो मुख्यः इतश्च गौण आत्मशब्दः कुतः

**हेयत्वावचनाच्च ॥८॥**

यदि गौण आत्मशब्दः स्यात्तदा तस्य हेयत्वमुच्येतान्यथा गौणात्मनिष्ठस्यैव मोक्षः स्यान्न तथोच्यते साधनोपदेशिषु वेदान्तवाक्येषु तमेवैकं जानथात्मानमन्यावाचो विभुं चाथामृतस्यैष सेतुरिति तस्य तावदेव चिरंयावन्न विमोक्षेऽथ संपश्ये इत्यादिषु अतः श्रीरामनामाभिन्नं ब्रह्मैव मुख्यतया आत्मशब्दवाच्यं इतश्चापि न प्रधानमात्मशब्दवाच्यं कुतः

**स्वाप्ययात् ॥९॥**

स्वस्मिन् श्रीरामनामाभिन्ने आत्मशब्द वाच्ये ब्रह्मणि यत्रैतत्पुरुषः स्वपिति नाम सतांसोम्यस्तदा संपन्नो भवति स्वमपीतो भवतीति तस्मादेनं स्वपितीत्याचक्षते इत्यादि श्रुतिभिः अप्यपाल्लयश्च वर्णादित्यर्थः। इतश्च प्रधानं सगुण ब्रह्म च न जगतः कारणं

**गतिसामान्यात् ॥१०॥**

समानैव हि सर्वेषु वेदान्तेषु कारणतावगतिः तस्मात् श्रीरामनामाभिन्न निर्गुण प्रकाश ब्रह्मणः एव कारणत्वं। ननु प्रधानस्य जीवसमूह सगुणब्रह्मणश्च इत्यर्थः। इतश्च सर्वज्ञं निर्गुणं ब्रह्म श्रीरामनामाभिन्नं जगतः कारणम्।

**श्रुतत्वाच्च ॥११॥**

सर्वज्ञं श्रीरामनामाभिन्नं ब्रह्मैव जगतः कारणमिति सन्मूला सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा एतदात्म्यमिदं सर्वं तत्सर्वं तत्सत्यं स आत्मेत्यादिषु श्रूयतेत्यर्थः च शब्दादनुमानादितो जडप्रधानं जगत्कारणं नेति समुच्चीयते कुलालं विना मृत्तिकया घटोत्पत्तिर्न भवति यथा जन्माद्यस्य यतः इत्युपक्रम्य गतिसामान्यादित्येवमन्तैस्सूत्रैर्जीव समूह रूप सगुणब्रह्म प्रधानादीनां सहायं विना साक्षात् जगत्कारणत्वं प्रतिपादितम् तन्मध्ये तन्निष्ठस्य मोक्षोपदेशादित्युक्तं स च मोक्षः किं स्वरूपः मोक्षानन्तरं लभ्यः परमात्मा च किं स्वरूपः यच्छ्रीराम नामस्मरणान्मोक्षो लभ्यश्च परमात्मा तद्रामनाम किं स्वरूपं जिज्ञास्यमान श्रीरामनामाभिन्नं ब्रह्म च किं स्वरूपं तत्राह भगवान् सूत्रकारः।

**आनन्दमयोऽभ्यासात् ॥१२॥**

सैषानन्दस्य मीमांꣳसामवतीत्यारभ्य स एको मनुष्य गंधर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य स एको देवगंधर्वाणामानंदः श्रोत्रियस्य चाकामहतस्येति तैत्तिरीये।

मोक्षः आनंदमयः कुतोऽभ्यासात् आनंदमयमुपक्रम्य रसो वै सः रसं ह्येवायं लब्ध्वानंदी भवति इत्यादिषु किं च मोक्षलभ्यः परमात्मा आनन्दमयः कुतः अभ्यासात् एतमानन्दमयमात्मानमुपसंक्रामिनि आनंदरूपममृतं यद्विभाति तदा प्रणवादानंदमेवेति अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रह इत्यादिषु किंच यच्छ्रीरामनामस्मरणान्मोक्षो लभ्यश्च परमात्मा भवति तद्रामनाम आनंदमयः कुतः अभ्यासात् तारकं दीर्घानलं विंदु पूर्वकं दीर्घानलं पुनर्मायनश्चन्द्राय नमो नमो भद्राय इत्येतद्ब्रह्मात्मिका सच्चिदानन्दाख्येत्यु-पासितव्यम् सच्चिदानन्दात्मिको भगवान् सच्चिदानन्दात्मिकाऽस्य व्यक्तिरिति

**तदेव राममंत्रस्य मंत्रस्याद्यक्षरः स्मृतः।**
**अखण्डैकरसानन्दस्तारकं ब्रह्मसंज्ञकः।**
**रामायेति स विज्ञेयस्सत्यानन्दः चिदात्मकः।**

इत्यादिषु आनन्दो ब्रह्मेति व्यजानात् इति श्रुत्या विज्ञानमानन्दं ब्रह्मेति च प्रकाशब्रह्मणेऽप्यानन्दमयत्वम्।

**विकार शब्दान्नेति चेन्न प्राचुर्यात् ॥१३॥**

नानन्दमयशब्दो मोक्षस्य परमात्मनः रामनाम्नश्च प्रकाशब्रह्मणश्च प्रतिपादको भवति कुतः विकार शब्दात् मयटो विकारार्थत्वादिति चेन्न प्राचुर्यात् ततो विष्णुमयो देवं पूजयंति स्म देवता इतिवत्परमाणुमयी पृथिवीतिवच्च अंमयो यज्ञ इतिवच्च मयटः प्राचुर्य्यार्थकत्वादित्यर्थः।

**तद्धेतुव्यपदेशाच्च॥१४॥**

यस्मान्मोक्षस्य परमात्मनः श्रीरामनाम्नश्च आनन्दहेतुत्वं व्यपदिशति श्रुतिरतो हेतोः प्राचुर्य्यार्थे मयटः आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन एष ह्येवानंदयति पितृघ्नो मातृघ्नो जारो गुरुहा अनेककोटिपतिघ्नो अनेककृतपापो मम परावति कोटिनामानि जपति स सर्वेम्यः पापेभ्यो मुच्यते स्वयमेव सच्चिदानन्दरूपो भवेदित्यादि नन्वानन्दमये श्रीराम नामाभिन्ने सर्वजगत्कारण प्रकाश ब्रह्मणि समष्टिरूपेण स्थितस्यानंदमयत्वं जगत्कारणत्वं च किन्न स्यादित्याह ॥२॥

**मांत्रवर्णिकमेव च गीयते ॥१५॥**

यस्मात्सत्यं ज्ञानमनन्तं ब्रह्मेति मांत्रवर्णपठितं तद्ब्रह्म तदेव ब्राह्मणे आनन्दमय इत्यनेन गीयते अत आनन्दमयो ब्रह्म न तु श्रीरामनामाज्ञानवान्मुक्तः समष्टिजीवो जगत्कर्ता च। नन्वानंदमये श्रीरामनामाभिन्ने प्रकाशब्रह्मणि सर्वजगत्कारणैकसमष्टिरूपेणस्थितस्यानन्दमयत्वं सजगत्कारणत्वं च किन्न स्यादित्यत आह त्रुटिप्रकारः नन्वानंदमय श्रीरामनामजपेनानंदमय षष्ठ शरीर प्राप्तावानंदमयस्य जीवस्य जगत्कारणं किं न स्यादिति। इत्यत आह

**नेतरोनुपपत्तेः॥१६॥**

बद्धसमष्टिजीवादितरः संसारान्मुक्तो जीवः सर्वथा नानन्दमयत्वे न जगत्कारणं कुतः अनुपपत्तेः अणुत्वे न तदधीनत्वेन च सोऽकामयत बहु

स्यामिति बहु भवनानुपपत्तेरित्यर्थः ननु मुक्तावस्थायां ब्रह्मविद् ब्रह्मैव भवति इति श्रुत्या ब्रह्म स्वरूपस्य जीवस्य कुतो न जगत्कर्तृत्वमित्यत आह।।

**भेदव्यपदेशाच्च ।।१७।।**

कर्मक्षये याति सतत्वतोऽन्य इति सोऽश्नुते सर्वान् कामान् सह ब्रह्म नाविपश्चितेति एतन्मर्त्य शरीरमतिसृज्य ब्रह्मणैव पश्यति ब्रह्मणैव जिघ्रतीत्यादि श्रुत्या भेद श्रवणान्मुक्तजीवस्सर्वथा ब्रह्मैव न भवति अतोऽपि न मुक्तजीवस्य जगत्कर्तृत्वम् ब्रह्मविद्ब्रह्मैव भवतीति श्रुत्यर्थस्तु देवो भूत्वा देवं यजेदितिवत्तत्सदृश्य रूपतयानिर्वाह्यः ब्रह्मणैव पश्यतीत्यादि श्रुतिस्तु ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवमिति कैवल्योपनिषच्छ्रुतेश्च।

**सिद्धा ब्रह्म सुखे मग्ना दैत्याश्च हरिणा हताः।**
**तज्ज्योतिर्भेदने शक्ता रसिका हरिवेदिनः।।**

इति स्मृत्या च ये प्रकाश ब्रह्म भित्वा साकेतं गतास्तत्परा ननु प्रकाश ब्रह्मणि लीनस्य मुक्तस्य त्वानन्दमयत्वं वर्तत एवेति चेदुच्यते प्रकाशब्रह्मणि लीनानां मुक्तानां तु स्व स्वरूपे केवलचैतन्यमात्रे स्थिततत्वात् किंचित् ज्ञानमेव नास्तीत्यतस्तेषां नानन्दमयत्वं जगत्कारणत्वं चेति ननु घट संवृतमाकाशं लीयमाने घटे यथा घटो लीयेत नाकाशं तद्वज्जीवो नभोपम इति घटे भिन्ने यथाकाश आकाशस्य यथा पुरा एवं देहमृते जीवे ब्रह्म संपद्यते तदेति श्रुतिस्मृतिभ्यां विभुचैतन्ये ब्रह्मण्यणुचैतन्यस्य जीवस्य लये सति चिद्विग्रहत्वस्य हानिस्तदा भेदकाभावात् यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे एवं प्रजाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते इत्यादि श्रुतेरिति चेदुच्यते उक्त श्रुतिर्भिन्ना एव जीवा ब्रह्मणि निलीय स्थिता इत्यर्थपरेति गंगासिन्धु प्रधानाभिरापगाभिः समावृतः समुद्रः समुपक्रम्य पूर्वमामंत्र्य वीर्यवानिति श्रीमद्रामायणात् सप्तसागर संगमितियमुनास्तोत्राच्च तथा घटाद्याकाशोऽपि भिन्ना एव सावयवत्वात्पंचीकरणबोधनाच्च तृतीयस्यामितो दिवीति श्रुतेः अणुजीव समूहानामपि। व्यापकत्वं यत्र जलादि द्रव्य संयोगस्तत्र

तत्र जीवोत्पत्तिर्दर्शनात् नित्यः सर्वगत स्थाणुरचलोऽयं सनातन इति स्मृतेश्च एवं यथा घटादौ भिन्ने घटाद्याकाशो महाकाशे लीयते तथा देहे नष्टे अणुचैतन्यं जीवो जीवसमूहे विभुचैतन्ये ब्रह्मणि च लीयते पुनश्चन्द्रकिरण द्वारा शरीरं प्राप्नोति इति पंचाग्नि विद्यायां स्पष्टयिष्यते अन्यथा देहे मृते इत्यत्र देहत्यागमात्रेणैव मुक्तिरिति मन्यते तर्हि नास्तिकतापत्तिः स्यात्। ऋते ज्ञानान्न मुक्तिंरिति श्रुतिविरोधश्च स्यात्। तस्मात् स्वस्वरूपप्राप्ति रूपा मुक्तिर्यदा भवति तदा वाङ्मनोगोचरातीत श्रीरामचन्द्रः षष्ठशरीरं ददाति तदैवात्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मरेति स्मृत्युक्तस्वरूपज्ञानपूर्वकपर-स्वरूप ज्ञानात्परमुक्तिर्भवति **स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितं उभयोरेष संबंधो न परोभिमते ममेति** स्मृत्या जीवपरमात्मनोः एष एव नित्यसम्बन्धः येषामभेदनिष्ठानामेवं ज्ञानं नास्ति तेषामभेदोपासनया ब्रह्मत्वाप्राप्तौ स्वयमेवाभेदज्ञानमाविर्भविष्यतीति विचार्य्य श्रीमच्छंकराचार्यो ब्रह्मणो न तदेतदर्थमेव श्रीरामाज्ञानविशिष्टा ये मुनयः आचार्याश्च नटवन्नानाभावं दर्शयन्ति तेन नानाभावं ब्रह्मणः दर्शयति स्म। परमार्थतस्तु सेव्य सेवक भावादिकमेव स्मरन्ति तद्यथा कुत्रचित्किंचिदापाततः सूत्रार्थेऽभेदं दर्शयित्वा भेदव्यपदेशादिति सूत्रे भेद एव प्रतिपादितः शंकराचार्येण नटाकाशदृष्टान्ते न तु अज्ञजन मोहनार्थं कंचिदभेदेनापि दर्शितवान्तात्पर्यं तु भेद एवेति। एवं न भवेच्चेत्तर्हि शांकरभाष्यस्य भाष्यत्वं न स्यात् किन्तु सूत्रखण्डनमेव सर्वैरुच्यते तस्माद्भेदव्यपदेशादित्यादि सूत्रेषु भेदस्यैव स्पष्टतया प्रतिपादनान्न चिद्विग्रहत्वहानिरिति तत्र प्रमाणं **आगमैः कल्पितैः त्वं च जनान्मद्विमुखान्कुरु। मां च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरा** इति पाठ्यम्। **एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति। त्वं च रुद्र महावाहो मोहशास्त्रणि कारय** अतथ्यानि वितथ्यानि दर्शयस्व महाभुजप्रकाशं कुरु चात्मानमप्रकाशञ्च माङ्कुर्विति वाराहवचनम्। श्रीशंकराचार्य दत्तनटवद्दृष्टान्तस्यायमभिप्रायः यथा नट दर्शितरूपाणां मिथ्यात्वम् भूयिष्ठमायाविष्टस्य सत्यत्वं तत्र नट शरीरस्य तच्छरीरिणश्च भेद एव तिष्ठति तथा चिद्विग्रहस्य प्रकाशब्रह्मणो विग्रहिणश्च भेद एव एवं सरित्समुद्रादीनां चिद्विग्रहातिरिक्तत्वे सति मिथ्यात्वं चिदचिद्विग्रहत्वे न सत्यत्वं ईक्षतेर्नाशब्दमित्यारभ्य भेदव्यपदेशाच्चेत्यन्तैः

सूत्रैः जड़जीवयो- र्जगत्कारणत्वं निराकृतं।

**तत्रापरं त्वक्षरं या सा प्रकृतिर्जडरूपिका।**
**श्रीपरा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया।**
**तमक्षरं परं प्राहुः परतः परमक्षरमिति।**

स्कन्दपुराणीयस्मृतेः प्रकृतेः स्वरूपद्वयं चेतनमचेतनञ्च तन्नेक्षतेर्ना-शब्दमिति सूत्रेण अचेतन प्रकृतेः स्वतो जगत्कारणत्वं नास्तीत्युक्तम् इदानीं चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगदिति स्मृति प्रतिपादितचेतन प्रकृतेरपि जगत्कारणत्वं निराक्रियते।

### कामाच्च नानुमानापेक्षा ॥१८॥

सोऽकामयत एकोऽहं बहु स्याम प्रजायेयेत्यादिषु चिच्छक्त्या भासरूपस्य चेतनप्रधानस्य स्वतः कामयितृत्वासंभवात्। न चेतनं प्रधानमानन्दमयत्वेन जगत्कारणत्वेन चापेक्षितव्यम् नित्यो नित्यानां चेतनश्चे तनानामेको बहूनां यो विदधाति कामानित्यादि श्रुतेः नित्यानां जड़माया कालकर्मस्वभावादीनां दशमहाविद्यारूपप्रकृतीनां चेतनानां बहूनां जीवानां च नित्यश्चेतना एकः बहून्कामान्विदधातीत्यर्थः विद्याविद्ये ईशते यस्तु सोऽन्यः इत्यादि श्रुतिभ्यः।

### अस्मिन्नस्य च तद्योगं शास्तिः॥१९॥

अस्मिन्नस्यानन्दमये ब्रह्मणि अस्योपासकस्य जीवस्य चेतनाचेतन प्रकृतेः पृथक्कृत्य तद्योगं शास्ति प्रवृत्यधर्ममणुमेतमाप्य स मोदते मोदनीयं हि लब्ध्वेत्यादिना आनन्दमयप्रकरणे उभयविध प्रकृत्यादीनां जगत्कारणत्व निराकरणपूर्वकमानन्दमयस्य श्रीरामनामाभिन्न सर्व रूपान्तर्य्यामि प्रकाशब्रह्मणो जगत्कारणत्वं प्रतिपादितम् तस्य सर्वव्यापकतया निराकारकत्वमिति प्रतीयते तन्निरासार्थमाह भगवान्सूत्रकारः–

**अन्तस्तद्धर्मोपदेशात् आदित्ये॥२०॥**

आदित्ये चक्षुषि चान्तर्मध्ये श्रूयमाण: परमात्मा साकार एव कुत: अथ य एषोऽन्तरादित्यो हिरण्मय: पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणवात्सर्व एव सुवर्णस्तस्य यथाकप्यासं पुण्डरीकमेवाक्षिणी तस्योदितिनाम स एव सर्वेभ्य: पाप्मभ्य: उदित उदेति ह वै सर्वेभ्य: पाप्मभ्यो य एवं वेदेत्याद्यधिदैवतमथाध्यात्ममप्यथ य एषोन्तराक्षिणि पुरुषो दृश्यते इत्यादि श्रुति प्रतिपाद्य जड़जीवान्तर्य्यामि श्रीरामनामाभिन्नान्तर्य्यामि प्रकाश ब्रह्मापि द्विभुज पुरुष एव सर्वत्र ब्रह्मदर्शिन: प्रह्लादस्य साकार ब्रह्मण एव दर्शनादिति युक्ता च साकारधर्मोपदेशादिति सूत्रार्थ: तथा च श्रुति: वृहदारण्यके स य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिणि पुरुषस्तस्य भूरितिशिर एकं शिर: एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एतेऽक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेदेति हिरण्यश्मश्रुपदेन द्रुतहिरण्योद्भूत धूमवद्विलक्षण नीलवर्णश्मश्रु: हिरण्यकेश इत्यत्रापि तद्धर्मवद्विलक्षण नीलवर्ण केश इत्यर्थ:। सर्व एव सुवर्ण इत्यस्य अतिद्रवीभूत सुवर्णस्य विलक्षण हरितवर्णवत्सर्वांग सुंदर वर्ण इत्यर्थ: यथा कप्यासं पुण्डरीकमेवाक्षिणी इत्यस्य कं जलं पिवतीति कपिनीलं तत्रास्त इति कप्यासं नालस्थकमलं तत्र स्थितस्यैव शोभाधिक्यात् काव्ये शोभाधिक्येन पुरुषनेत्रयोरारुण्य वर्णनं नास्ति किंतु नेत्र प्रान्तयोर्नेत्रडोरकाणामेव संभव: नास्तीति पुण्डरीककेशरेत्यारुण्यमस्त्वेवेति न काप्यनुपपत्ति: अत एव श्री हनुमन्तं प्रति श्री जानकीवचनम् कच्चिन्न तद्धेमसमानवर्णमिति ये तु कष्ट कल्पनया कप्यासपदे रक्तकमलं वदन्ति तेषां श्रम एव स्यात् किंच कोपनिद्रोत्थानादावत्यरुणत्ववर्णनात् साधारणावस्थायामत्यरुण वर्णनाभावाच्चात्र नेत्रारुणतावर्णनं विरुद्धं स्यात्तथा च अथ य एषोऽन्तरादित्ये हिरण्मय: पुरुषो दृश्यते इत्यादि श्रुति प्रतिपादित पुरुष: सूर्य मण्डलमध्यस्थं रामं सीतासमन्वितमित्यादि सनत्कुमार संहितावाक्यात् मनोवचनागोचरातीत द्विभुज श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्मणि एव सूर्य मण्डलस्थ ध्येया मूर्ति: सूर्यध्येयापि सैवेति तस्य मुख्यस्थानं तु साकेतलोक एव तस्य द्विभुज प्रकाशिन: प्रकाशत्वात् ननु तस्य वाङ्मनोगोचरातीतत्वात्कथं ध्येयत्वमिति

चेदुच्यते सर्वान्तवर्तमानानि श्रीरामनामाभिन्नान्तर्य्यामि प्रकाश ब्रह्मणः स्वतः सिद्धानि द्विभुजरूपाण्येव मनुनारायणस्य चतुर्भुजत्वमेवेति चेच्छृणु–

**शंखचक्रधरं देवं द्विभुजं पीतवाससम्।**
**प्रारंभे कर्मणां विप्र पुण्डरीकं स्मरेद्धरिमिति।।**

विष्णुपुराणीय स्मृत्या नारायणस्यापि स्वतः सिद्धं द्विभुजरूपमेव श्रीराम ब्रह्मरूपीद्विभुज नारायणः भक्तेच्छाया चतुर्भुजाष्टभुजमत्स्यनारसिंहादि रूपधारणं करोति उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पनेति श्रीरामतापनीयश्रुतेः

**द्विभुजो जानकीजानिस्सदा सर्वत्र एव हि।**
**भक्तेच्छातः पुनर्जातो वैकुण्ठे तु चतुर्भुजः।।**

इति शिव संहितायाम् सूर्यनारायणादि रूप प्रकाशब्रह्मान्तर्यामित्वेन श्रीरामचन्द्रस्य सूर्यमण्डल मध्यस्थमित्युक्तनृसिंहरूपाण्यपि साकाराण्येवा-विर्भवन्ति।

**यस्य प्रभाप्रभवतो जगदण्डकोटि कोटिष्वसेषु वसुधादिवि भूतभिन्नं।**
**तद्ब्रह्म निष्कलमनन्तमगाधबोधं गोविन्दमादि पुरुषं तमहं भजामि।।**

इत्यादि स्मृतेः। प्रकाशब्रह्म द्विभुज श्रीरामस्यैव प्रभारूपमिति यत्र यत्र प्रकटीभवति तत्र तत्र साकार एव नृसिंहादिरूपेण प्रकटीभवति साकारस्यैव व्यापकत्वमित्थमनुमीयते ननु आकाशादौ कथं व्यापकत्वमिति चेदुच्यते–

**गिरं समाधौ गमने समीरितां निशम्य वेधास्त्रिदशानुवाच ह।**
**गां पौरुषीं मे श्रृणुतामराः पुनर्विधीयतामाशु तथैव माचिरम्।।**

इति भागवतस्मृत्या यथाकाशादिषु साकाररूपव्याप्तिर्नाङ्गीक्रियेत तर्हि गिरं समाधावित्यादि भागवत स्मृत्या वाकाशे गां पौरुषीमित्यस्यानुपपत्तिःस्यात् तस्माद्भक्तः यद्रूपं यत्रैव स्मरति तथा तत्रैव प्रकटीभवति अणोरणीयान्महतो महीयानित्यनेन तस्य द्विभुजरूपस्य दुर्लक्षत्वात् आकाशवद्व्यापकत्वमात्रे नैव च निराकारत्वं वस्तुतः साकारत्वमेव तथा च श्रीरामनामाभिन्न-

प्रकाशब्रह्मरूपद्विभुजनारायणस्वरूपेणैव वाङ्मनसगोचरातीतश्रीरामचन्द्रः सूच्यते। अन्तर्य्यामिनः वास्तवरूपं द्विभुजमेव अंगुष्ठमात्रं पुरुषं नाभिस्थाने प्रतिष्ठितं तं प्रवहेन्मुञ्जादिवेषीकां धैर्य्येणेत्यादि श्रुतेः पुरुषशब्दशक्त्या निश्चिततत्वात् य एवं विग्रहो व्यापी परिच्छिन्न स एव हि एकस्यैवैकदा चास्य हि रूपत्वं विराजते इत्यादि स्मृतेश्च इति श्रुतिस्मृतिम्यां श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मणो द्विभुजं भवविशेषरूपं तस्य द्विभुजप्रभारूपत्वात्। अन्यानि नानारूपाणि चतुर्भुजाष्टभुजादीनि दहराकाशादीनि च भक्तेच्छया भवन्ति दहराकाशादिषु च दुर्लक्ष्यत्वान्निराकारत्वमिति आदित्यमित्युपलक्षणम् अतः सर्वत्र परिपूर्णान्तर्य्यामिब्रह्मणः साकारत्वमेवेति सिद्धम्। ननु सूर्य्यमण्ड-लाभिमानिनो जीवस्यान्तर्यामिप्रकाश ब्रह्मसाकारत्वेन निरूपितं स सूर्य्यमण्डलाभिमानी जीवो ब्रह्मैवास्तु तथा च श्रूयते। आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं खल्विदं ब्रह्मेत्यादि श्रुतिषु सर्वस्य ब्रह्मत्वश्रवणाप्रकाश ब्रह्मणोऽन्तर्यामित्वासंभवत्याजीव एव इत्याशंक्याह भगवान् सूत्रकारः।

**भेद व्यपदेशाच्चान्यः॥२१॥**

भिन्नो चिन्त्यः परमो जीवसंघातपूर्णपरो जीव संघो ह्यपूर्णः यतस्त्वसौ नित्यमोक्षो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेदिति जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इत्यादि श्रुत्या भेदव्यपदेशात् प्रकाशब्रह्मणः प्रपञ्चभिन्नत्वान्नान्तर्यामित्वासंभव आदित्यादि शरीराभिमानिनो जीवो ब्रह्मान्य इत्यर्थः। चिदचिद्विग्रहत्वेनात्मैवेदं सर्वमित्याद्यभेद प्रतिपादकाः सर्वा श्रुतयः संगता एवेति अस्य लोकस्य का गतिरिति होवाच आकाश इति सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यंत्याकाशो ह्येवैभ्योज्यापानाकशः परायणमिति श्रुतौ किं आकाशशब्देन भूताकाश उप प्रकाशब्रह्मेत्याशंक्य एवेत्यत आह भगवान् सूत्रकारः।

**आकाशस्तल्लिङ्गात्॥२२॥**

आ समंतात् काशते प्रकाशते इत्याकाशस्तेनाकाशशब्देन चैतन्याकाशरूप श्रीरामनामाभिन्नप्रकाशब्रह्मण एव ग्रहणं युक्तं कुतः सर्वाणि ह वा इमानि

भूतान्याकाशादेव समुत्पद्यन्ते इत्यादि श्रुत्या श्रीरामनामाभिन्नप्रकाशब्रह्म लिंगदर्शनात् तस्मादेतस्मादात्मान आकाशः संभूत आकाशाद्वायुरित्यादि श्रुत्याकाशस्योत्पत्ति र्दर्शनान्नभूताकाशग्रहणं युक्तं अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेष्वित्यादि श्रुतौ ज्योतिः शब्देन किं प्रसिद्धं तेज एव नेत्याह भगवान् सूत्रकारः–

**ज्योतिश्चरणाभिधानात् ॥२३॥**

ज्योतिः शब्देन श्रीरामनामाभिन्नप्रकाश ब्रह्मेव ग्राह्यं कुतः यदद्वैतं ब्रह्म यस्य तनुभेति वेदसारोपनिषच्छ्रुत्या तदर्थ प्रतिपादिकया नखेन्दुकिरण श्रेणी पूर्ण ब्रह्मैक कारणमिति पद्मपुराणीयस्मृत्या च चरणाभिघातान् चरणोपलक्षित तनुनखाभिधानादित्यर्थः कतमा सा देवतेति प्राण इति हो वाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशंति प्राणमभ्युज्जिहृत इति श्रुतौ प्राणशब्देन किं प्रसिद्धः प्राणा एव नेत्याह।

**अतएव प्राणः ॥२४॥**

भूतमात्राः प्रज्ञामात्राः स्वर्पिताः प्रज्ञामात्राः प्राणोऽर्पिताः स एष प्राज्ञ आत्मानंदोऽजरोऽमृतः न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान् एष ह्येवैनं साधुकर्म कारयति यमेभ्यो लोकेभ्यः उन्निनीषति एष उ ए वैन साधुकर्म कारयति तं यमधो निनीषति एष लोकपाल एष लोकाधिपतिरेष सर्वेशः स मे आत्मेति विद्यादिति कौशीतकि श्रुत्या प्राणस्य प्राणमिति तलवकार श्रुत्या च प्राणशब्देन श्रीरामनामाभिन्नाकाशब्रह्म एव ग्रहणं युक्तम्।

**छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पण निगदात्तथाहि दर्शनम्॥२५॥**

गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपद्यसि नहि पद्यसीति गायत्री वा इदं सर्वं भूतं यदिदं किंचेत्यादि श्रुत्या गायत्र्या ग्रहणं कुतो नेति चेन्न तथा चेतोऽर्पणनिगदात् यः पुनरेतं त्रिमात्रेण ॐ मित्येनैवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्य्ये संपन्नः यथा पादोदरस्त्वचा वि निर्मुच्यते एवं ह वै।। स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकमिति

श्रुत्या यथोकार प्रतिपाद्ये ब्रह्मणि चेतोदर्पणं विहितं तथा गायत्रीवाक्ये गायत्रीजपद्वारेण तदनुगतगायत्र्यर्थप्रतिपाद्ये ब्रह्मणि चेतसोऽर्पण कथनात् गायत्रीशब्देन श्रीरामनामाभिन्नप्रकाशब्रह्मैवेति तथा हि देवस्य क्रीडाद्याश्रयस्य श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मण इत्यर्थः सवितुर्लोकान् सूते उत्पादयति इति सविता तस्य वरेण्यं सर्वोत्कृष्टं भर्गो ब्रह्माख्यं तेजो वयं धीमहि ध्यायेम यः श्रीरामनामाभिन्नब्रह्मान्तर्यामिरूपेण नोऽस्माकं धियो वुद्धीः प्रचोदयात् प्रेरयेदिति ब्रह्माख्यं तेजः धीमहीत्यत्र वाच्यवृत्या प्रतिपाद्यं साकार प्रकाशब्रह्मैव विवक्षितम्। दिवुधातोः क्रीडार्थस्य प्रतिपादनात् तात्पर्यवृत्या तेजोऽन्तर्य्यामि वाङ्मनोगोचरातीतश्रीरामचन्द्रस्यैव ध्येयत्वमिति व्यंजितम् तथा च वाङ्मनोगोचरातीत श्रीरामचन्द्रएव गायत्र्या तात्पर्यवृत्या प्रतिपाद्य इति।

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२६॥**

एतावानस्य महिमातो ज्यायांश्च पूरुषः पादोऽस्यविश्वाभूतानि इति श्रुत्या भूतादि पादकथनोपपत्तेः एवं त्रिपादस्यामृतंदिवि त्रिपादूर्ध्वमुदैत्पुरुषः ततो विराडजायतेत्यनेन विराड्जनकं श्रीरामनामाभिन्नाप्रकाशब्रह्म प्रतिपाद्यं किमस्य मुखमासीत् किं वाहू किमूरू पादा उच्येते **ब्राह्मणोऽस्य मुखमासीद्वाहूराजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां ꣳशूद्रोऽजायतेति** श्रुत्युक्तद्विवचनतात्पर्यवृत्या तदन्तर्यामी गायत्री तात्पर्यार्थं प्रतिपाद्या वाङ्मनोगोचरातीत द्विभुजश्रीराम एवेति।

**उपदेश भेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२७॥**

त्रिपादस्यामृतंदिवि इति सप्तम्या आधारत्वेन अथ यदतः परो देवो ज्योतिरिति पंचम्या मर्यादत्वेन चेत्युपदेशभेदान्न तस्य प्रत्यभिज्ञानमस्तीति चेन्न उभयस्मिन्नपि अविरोधात् उभयस्मिन्नपि सप्तम्यन्ते पंचम्यन्ते चोपदेशेन विरुद्ध्यते यथा शाखायां चन्द्रः शाखातः परोऽपि चन्द्र इति अतएव प्राण इति पूर्वसूत्रे भूतप्राणस्य निराकरणमुक्तं इदानीं प्राणोऽस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्येति न वाच्यं विजिज्ञासीद्वक्तारमविद्यादित्यादि श्रुत्या प्राणशब्देन जीवस्य ग्रहणं कुतो नेत्यत आह।

**प्राणस्तथानुगमात् ॥२८॥**

प्राणशब्दवाच्यः परमात्मैव न जीवः कुतः यं त्वं मनुष्याय हिततमं मन्यसे इत्यादि श्रुतौ हिततमत्वेन तथाऽनुगमात् परमात्मबाधादित्यर्थः प्राणोऽस्मि प्रज्ञात्मा तं मामायुरित्यादि श्रुतौ मामित्यनेनान्तर्य्याम्युपदिष्टः वक्तारमित्यनेनापि चेत्यर्थः तमेवार्थम् दृढयन्नाह भगवान् सूत्रकारः–

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥२९॥**

वक्तारं विजानीयादित्युपदेशात् वक्तुरिन्द्रस्यात्मा नात्र प्राणशब्द निर्दृष्टः परमात्मैव यतः अस्मिन् प्रकरणे अध्यात्मसम्बन्धेन एष सर्वेशः स मे आत्मेति विद्यादित्यादिश्रुत्या अन्तर्य्यामी भूमैवोपदिष्टो न जीव इति ननु प्रकाश ब्रह्मणः प्रकरिणत्वे मामेव विजानीहि मामुपास्वेतीन्द्रवचनस्य गतिरित्यत आह।

**शास्त्र दृष्ट्या तूपदेशो वामदेववत् ॥३०॥**

अन्तः प्रविष्टः शास्ता जनानां सर्वात्मेति शास्त्रदृष्ट्या चिदचिद्विग्रहत्वेनान्तर्यामिनं विग्रहविग्रहिभावप्रयुक्ताभेदेन न पश्यत इन्द्रस्य मामुपास्स्वेत्युपदेशः। तत्र दृष्टान्तः। वामदेववदिति तदद्वैततत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य्यश्चेत्यादि श्रुत्या यथा ऋषिर्वामदेवः तमन्तर्य्यामिनं पश्यन् अहं मनुरभवमित्याद्युक्तवान्।

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादि च तद्योगात् ॥३१॥**

यद्यात्मसम्बन्धभूतदर्शनान्नपराचीनस्य देवतात्मनः उपदेशस्तथा त्रिशीर्षाणं त्वाष्टमहनमिति जीवलिङ्गात्सह ह्येतावस्मिन्वसतः सहोत्क्रामत इति जड़ प्राणलिङ्गाच्च न श्रीरामनामाभिन्न प्रकाश ब्रह्मान्तर्य्यामि परमिदं वाक्यमिति चेन्न उपासनत्रैविध्यात् इह कौषीतक्युपनिषदि त्रिविधमुपासनं प्रसज्येत जीवोपासनं मुख्य प्राणजडोपासनं ब्रह्मोपासनं चेति यत्त्वं मनुष्याय हिततमं मन्यसे इति हिततमोपदेशस्तद्योगात् तयोश्चिदचितोर्य्योगादुपासात्रैविध्यं

न भवति किंतु चिदचिद्विग्रहत्वेन श्रीरामनामाभिन्न प्रकाशब्रह्मान्तर्य्याम्युपासनयैव सर्वार्थसिद्धिर्भवति आश्रितत्वात्। अन्यत्रापि मनोमयः प्राणशरीरो भारूप इत्यादौ चिदचिद्विग्रहिप्रकाशब्रह्मण उपमामाश्रितमिति तं मामायुरमृतमित्यत्र तं वाङ्मनोगोचरातीतं श्रीरामचन्द्रमुपास्व मां श्रीजानकीं चोपास्स्वेति गूढसिद्धान्तार्थः इन्दिरालोकमाता मा क्षीराब्धितनया रमेति कोशात् इमं मन्त्रमगस्त्यस्तु जप्त्वा रुद्रत्वमाप्तवान् इत्यारभ्य–

**कार्तिकेयो मनुश्चैवमिन्द्रार्कगिरिनारदाः।**
**बालखिल्यादि मुनयो देवतात्वं प्रपेदिरे।।**

इति हारीत स्मृत्याम्। इन्द्रस्य रामोपासकत्वात् श्रीमद्रामायणे प्रतर्दनस्य राम सखत्व श्रवणाच्च प्रतर्दनमिन्द्रः श्रीरामोपासनामववाच्यवृत्या तात्पर्यवृत्या चोपदेशः इति श्रीमद्‌भगवदवतारवेदार्थनिर्णायक श्रीमद्वेदवेदान्ताचार्य्या श्रीमद्वेदव्यासकृत वेदान्त सूत्र सिद्धि श्रीमहाराजाधिराज श्रीमहाराजा श्रीराजाबहादुर श्रीसीतारामचन्द्रकृपापात्राधिकारि विश्वनाथ सिंह जू देव कृते श्रीराधावल्लभीयमत प्रकाशक भाष्ये प्रथमाध्यायस्य प्रथमो पादः।।१।।

# श्री राधावल्लभीयमत प्रकाशकं

## ब्रह्मसूत्र-भाष्यम्

### द्वितीयः पादः॥

प्रथमे पादे जन्माद्यस्य यत इति आकाशादेः समस्त जगतो जन्मादि कारणं श्रीरामनामाभिन्नान्तर्य्यामि प्रकाश ब्रह्मेत्युक्तं तस्य समस्त जगत्कारणस्य श्रीरामनामाभिन्न ब्रह्मणो व्यापित्वं नित्यत्वं सर्वज्ञत्वं सर्वात्मत्वमित्येवं जातीयको धर्म अर्थत उक्त एव भवति अर्थान्तरप्रसिद्धानां च केषांचिदाकाशादिशब्दानां ब्रह्मपरत्वे कानिचिद्वाक्यानि संदिह्यमानानि हेतु प्रतिपादनेन श्रीरामनामाभिन्न-परतयातिवर्णितानि तात्पर्यद्वयावाङ्मनसगोचरातीत प्रकाशि श्रीराम परतया चावर्णितानि पुनरथ भाति वाक्यानि ब्रह्मलिंगकानि संदिह्यते किं तानि श्रीरामनामाभिन्न प्रकाश ब्रह्म प्रतिपादयन्ति आहोस्विदर्थान्तरं किंचिदिति तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते तत्रादौ सर्वं खल्विदं ब्रह्म आत्मैवेदं सर्वमित्यादि श्रुतिश्चिदचिद्विग्रहत्वेनाभेदं दर्शयति। आहोस्वित्सर्वथाभेदमिति द्वितीये ज्ञानिषु अप्रसिद्धेरित्यतश्चिदचिद्विग्रहत्वेनेवेत्याह।

**सर्वत्र प्रसिद्धोपदेशाद्॥१॥**

चिदचिद्विग्रहत्वेन नैवाभेदः कुतः ज्ञान्यज्ञानिसाधारणतया सर्वत्र प्रसिद्धोपदेशात् तथा हि सर्वं खल्विदं ब्रह्म तज्जलानीति शांत उपासीताऽथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरा इत्यादि तज्जत्वातल्लत्वात्तदनत्वादिदं सर्वं ब्रह्मागतःशांतः सन्नुपासीताथ खल क्रतुमयः पुरुषो भवति अर्थादस्मिल्लोके यथा क्रतुर्यथोपासनः पुरुषो भवति तदनन्तरमितः प्रेत्य शरीरं त्यक्त्वा तथैव भवति अतः सक्रतुं कुर्वीत उपास्यस्वरूपमाह मनोमयः प्राणशरीरो भारूपः

सत्यसंकल्प इत्यादि तत्र संदिह्यते किं मनोमयत्वेन वद्धजीव इहोपास्यत्वेन निर्दिष्ट: आहोस्वित्प्राणशरीराश्चैतन्यमात्रस्वरूपोमुक्तो जीवोऽथ भारूप सत्य संकल्पादि धर्मैर्ब्रह्मेति आशंक्याह सर्वत्र प्रसिद्धोपदेशात् इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् पृथगुत्पद्यमानानां मत्वा धीरो न शोचतीति श्रुत्या मन आदीनामिन्द्रियाणामनित्यत्वेन जीवस्य भगवच्चिद्विग्रहत्वेन च न मनोमय: प्राणशरीर उपास्यत्वे न निर्दिष्ट: चिन्मात्रस्वरूपो मुक्तो जीवोऽपि न उपास्यो भवति एषोऽणुरात्मा चेतसा वेदितव्य इति तमक्रतु: पश्यति वीतशोको धातु: प्रसादान्महिमानमात्मन इत्यादि श्रुत्या मुक्तस्य जीवस्याणुत्व तदधीनत्वप्रसिद्धेर्न मुक्तो जीवोऽत्र उपास्यत्वेन निर्दिष्टस्तस्माद्भारूप: सत्यकाम: सत्यसंकल्प: सर्वकाम: सर्वगन्ध: सर्वरस इति सर्वं खल्विदं ब्रह्मेत्यादि श्रुत्यादिभ्य मनोमयत्वादि धर्मैः चिदचिद्विग्रहत्वेनाभिन्नै: श्रीरामनामाभिन्न प्रकाशरूपं ब्रह्मैवोपास्यं कुत: सर्वत्र प्रसिद्धोपदेशात् यत्सर्वेषु वेदान्तेषु प्रसिद्धं श्रीरामनामाभिन्नं ब्रह्मशब्दस्याबलं घनं जगत्कारणं तस्यैव चिद्विग्रहत्वेन सर्वत्रोपदेशात् तमक्रतु: पश्यति वीतशोक: इत्यादि श्रुत्या प्रसीदत्यच्युतेऽस्मिन्प्रसन्ने क्लेशसंक्षय इति स्मृत्या च श्रीरामनामाभिन्न प्रकाश-रूपचिदचिद्विग्रहब्रह्मोपासनया वाङ्मनोगोचरातीतप्रकाशिस्वरूप श्रीरामप्राप्ति-र्भवतीति तात्पर्य्यवृत्यैव सर्वत्र प्रसिद्धम् श्रीरामनामाभिन्नप्रकाशब्रह्मैवोपास्यमित्यत्र हेत्वन्तरमाह।

**विवक्षितगुणोपपत्तेश्च॥२॥**

विवक्षितानां सत्यसंकल्पादिगुणानां प्रकाशब्रह्मण्येव संभवादित्यर्थ:। ननु यथा यथोपासते स तदेव भवतीति श्रुत्या चिदचिद्विग्रहवत: सर्वरूपस्य ब्रह्मण उपास्यत्वेन नानादेवताप्राप्ति: स्यात् न तु प्रकाशब्रह्मोपासनया प्रकाशिन: श्रीरामस्य प्राप्तिरिति चेन्नाब्रह्मैव सत् ब्रह्माप्येतीत्यादि श्रुत्या च प्रकाशब्रह्मो पासनया प्रकाशब्रह्मप्राप्त्यनन्तरं सर्वे वेदा यत्पदमामनंति तपांसि सर्वाणि च यद्वदन्तीति श्रुत्या श्रीरामस्य प्रकाशिनस्तात्पर्य्यवृत्या प्राप्तिर्विवक्षिता चकारादन्यदेवतोपासकानामपि क्रमेण तस्यैव प्राप्ति:।

**शौरा:शैवाश्च गाणेशा: वैष्णवा: शक्ति पूजका:।**
**मामेव प्राप्नुवंतीह वर्षाप: सागरं यथा॥**

**आकाशात्पतितं तोयं यथा गच्छति सागरम्।**
**सर्वदेव नमस्कार: केशवं प्रति गच्छति॥**

इति स्मरणात्। ननु यथा यथोपासते स तदेव भवतीति श्रुते: का गतिरिति चेदुच्यते उपास्यं प्रकाशब्रह्म प्राप्य नान्यत्प्राप्नोतीत्यर्थपरत्वेन गत्युपपत्ते: तात्पर्यवृत्या श्रीरामप्राप्तिं प्रतिपादयन्तीनां श्रुतीनां गूढ़ार्थस्त्वन्य एव तथा हि यथा यथोपासते स तदेव भवतीति यथा यथा सखी दासादिभावेनोपासते स तदेव भवति इति तद्रूपो भवतीत्यर्थ:। ननु चिदचिद्विग्रहत्वेन श्रीरामनामाभिन्न ब्रह्मण: शरीरभूतासु सर्वदेवतासु सत्य संकल्पादि गुणानामुपपत्ते: तत्तद्देवताशरीराभिमानिनो जीवस्य साक्षादुपास्यत्वं सद्योमुक्तिप्रदत्वं च कुतो न स्यादित्यत आह।

**अनुपपत्तेस्तु न शारीर: ॥३॥**

शारीर: देवादिशरीराभिमानी जीवो न सत्य संकल्पादिगुणक: कुतोऽनुपपत्ते: सत्य संकल्प आकाश आत्मा वाक्यानादरो ज्यायान् पृथिव्या इति न आ ईषद् अपि दरं भयं यस्य स नादर: इत्येवं जातीयका गुणा: न शारीरे आंजस्येनोभयतो नोपपद्यंतेऽतो न शारीरस्य साक्षादुपास्यत्वं सद्योमुक्तिप्रदत्वं च किंचन ह्यध्रुवै: प्राप्यते हि ध्रुवं तदिति श्रुते अध्रुवैर्यज्ञादि: यज्ञादिसाधनै: तत्तदेवोपासनैश्च आत्मस्वरूपं न साक्षात्प्राप्यते नन्वीश्वरोऽपि शरीरे भवति न तु शरीरे एव भवति ज्यायान् पृथिव्या ज्यायानंतरिक्षा-दाकाशवत्सर्वगतश्च नित्य इति तदंतस्य सर्वस्य बाह्यत इति अंतर्वहिश्च तत्सर्वं व्याप्य नारायण स्थिति इत्यादि श्रुते: सर्वव्यापित्व श्रवणात् जीवस्तु शरीर एव भवति तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्यभावात् ननु ब्रह्माहमस्मि योऽसौ पुरुष: सोऽहमस्मीत्यादि श्रुत्या जीव ब्रह्मणोरभेदात्सत्य संकल्पादि गुणानामुपपत्तिस्तत्रापि किं न स्यादित्यत आह–

**कर्म कर्तृव्यपदेशाच्च ॥४॥**

एतमितः प्रेत्याभिसंभवितास्मि इति एतमिति प्रकृत मनोमयत्वादि गुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति अभिसंभवितास्मि इति शारीरमुपासकं कर्तृत्वेन प्रासृत्वेतव्यपदिशेति अभिसंभवितास्मि प्राप्तास्मीत्यर्थः न च सत्यां गतावेकस्य कर्तृव्यपदेशो युक्तस्तस्मादुपास्योपासकभावाभेदोधिष्ठाने एव अतो न शारीर उपास्य ननु ब्रह्माहमस्मीत्याद्युक्त श्रुतीनां का गतिरित्युच्यते चिदचिद्विग्रहत्वेनैव ब्रह्म भावनया श्रुत्युपदेश इति एतदेव दृढयति–

**शब्दविशेषात् ॥५॥**

एवमयमन्तरात्मन् जीवे पुरुषो हिरण्मय इति प्रथमान्त- सप्तम्यन्त शब्द विशेषाद्भेद एव–

**स्मृतेश्च ॥६॥**

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रामयन्सर्व भूतानि यंत्रारूढानि मायया॥**

इत्याद्या स्मृतिश्च शरीर परमात्मानौ भेदेन दर्शयति नन्वेवं चेदुपास्योपासकभेदः तर्हि सर्वं खल्विदं ब्रह्म तज्जलानीति शांत उपासीत इति श्रुति प्रतिपादित श्रीरामनामाभिन्न ब्रह्मोपासनया अभेदरूपाः या उच्छेद एव स्यादिति चेदुच्यते नान्योऽतोस्ति दृष्टा श्रोता मंता विज्ञाता क्षेत्रज्ञं चापि मां विद्धि सर्व क्षेत्रेषुभारतेत्यादि श्रुतिस्मृतिभ्यश्चिदचिद्विग्रहत्वेनाभेद एव सूत्रैरभेदमुक्त्वा भेददर्शनं तु चिदचिद्विग्रहत्वेनाऽभेददर्शनसमनन्तरं श्रीराम प्रसादलब्धपार्षदशरीरज्ञानाभिप्रायादेव तत्रापि व्यक्तिमात्रेण भेदः सच्चि-दानन्दात्मकत्वेनाभेद एवेति नित्य स्वसखीरूपविग्रहे षष्ठे स्वरूपरूपे ज्ञाते बन्धमोक्षव्यवस्था कुतः न मुमुक्षुर्न मुक्तश्च न बद्धो न च सासनमि-त्याद्यस्मृतबिन्दूपनिषच्छ्रुतेः तस्मादिहापि चिदचिद्विग्रहत्वेन सर्वत्र श्रीरामनामाभिन्न ब्रह्म भावनया श्रीरामचन्द्रोपासनां दर्शयति उपासीतेत्यस्योपसमीपे स्थितो भवेदित्यर्थः–

**खं वायुमग्निं सलिलं महींच ज्योतींषि सत्वानि दिशो द्रुमादीन्।**
**सरित्समुद्रांश्च हरेःशरीरं यत्किंच भूतं प्रणमेदनन्यः॥**

इति स्मृतेः तस्मात् श्रीरामनामाभिन्नान्तर्य्यामि ब्रह्मैवोपास्यम् नन्वेष आत्मान्तर्हृदय इत्यणीयसि हृदयायतने स्थिततत्वादणीयान् व्रीहेर्वा-यवाद्वेत्यादिनाणीयत्व व्यपदेशाच्च जीव एवोपास्यः न तु ब्रह्मेत्याशंक्याह भगवान् सूत्रकारः–

**आर्भकौकस्त्वा तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥७॥**

अर्भकमल्पमोको वा स्थानं यस्य तद्भावात् परिच्छिन्नाद्युक्ततत्वात् तद्व्यपदेशाच्च न ब्रह्मोपास्यमिति न चाप्यत्वात् अर्भकौकस्त्वेनोपास्यत्वात् सर्वगतोऽपीश्वरस्तत्रोपास्यमानः प्रसीदति तद्व्यपदेशाच्च न ब्रह्मोपास्यमिति चेन्न तथा चार्भकौकस्त्वं सर्वगतमपि सद्व्योमसूचीपाशाद्यपेक्षयार्भकौ कोऽणीयश्च व्यपदिश्यते यथा च समस्त भुवनाधिपतिरपि सन्नयोध्याधिपतिरिति व्यपदिश्यते स एवायोध्याधिपतिः सर्वकारणानामादिकारणं न तस्मात्परं तत्वमस्तीति विश्वंभरोपनिषच्छ्रुते एव ब्रह्मणो सर्वगतस्यापि अर्भकौकस्त्वा-दणीयस्त्वमहत्वयोर्व्यपदेशः एतेनाणोरणीयान् महतोमहीयानिति श्रुत्युक्त-योरणीयस्त्वमहत्वयोर्विरोध इत्यपि निरस्तं न तु महत्वस्य स्वाभाविकत्वा-दणीयस्त्वस्य चौपाधिकत्वात्स्वाभाविकौपाधिकयोश्च विरोधाभावात्। आकाश-वद्ब्रह्मणः सर्वगतत्वे सति जीववत्तस्यापि हृदयसंबन्धाविशेषाच्चेतनत्वाच्च सुखदुःखादिकर्मफलभोक्तृत्वं स्यादित्यत आह भगवान् सूत्रकारः।

**संभोगप्राप्तिरिति चेन्न कुतः वैशेष्यात्॥८॥**

जीवब्रह्मणोरेकशरीरस्थत्वे ब्रह्मणोऽपि सुखदः खादिसंभोगप्राप्तिः स्यादिति चेन्न कुतःवैशेष्यात्। ब्रह्म च क्षत्रञ्चेति चकारद्वयेन वैश्यशूद्रयो-स्तदुपलक्षणत्वेन जगतश्च ग्रहणं तस्यास्त्वं प्रकाशब्रह्मण एव संभवति जीवस्यातो स्वतंत्रत्व सर्वेश्वरकर्तृत्व जीवनियंतृत्वादिगुणवैशिष्यात् तस्मान्न शारीरंयद्ब्रह्मणोऽपि कर्मफलभोक्तृत्वं कठवल्लीषु पठ्यते यस्य ब्रह्म क्षत्रं

चोभे भवत ओदन: मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स: किमत्रायत्ताजीव: काल: परमेश्वरो वेति संशय: तत्र जीवस्य कर्मवश्यत्वेन भोक्तृत्वसंभवात् जीवताभवितुमर्हति न परमेश्वरस्तस्य तदभावादित्याशंक्याह भगवान्सूत्रकार:।

**अत्ता चराचरग्रहणात् ॥९॥**

श्री रामनामाभिन्नब्रह्मस्वरूप: परमेश्वर एवात्र कुत: चराचरग्रहणात् न चेदं कर्मनिमित्तं भोक्तृत्वमपितु जगज्जन्मस्थितिक्षयहेतुभूतस्य प्रकाश ब्रह्मण: संहर्तृत्वं मृत्यूपसेचनत्वेन तादृशश्च जगतश्च ब्रह्म च क्षत्रंचेति चकारद्वयेन वैश्यशूद्रयो: सर्वस्य जगत: ग्रहणम् तत्वं प्रकाशब्रह्मण: एव संभवति न जीवस्यातो न जीवोऽत्ता किंतु प्रकाशब्रह्मैव सर्वं जगत् संहर्तृत्वेनात्ता अन्यत्राप्येवमस्तित्वं प्रकाशब्रह्मण एव श्रूयते तथाहि अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तम: परे देवे एकीभवतीति पृथिव्यादिकमाकाशे आकाशोऽहंकारे महत्तत्वरूपे प्रधाने अव्यक्ते अव्यक्तं समष्टिजीवरूपेऽक्षरे ब्रह्मण्यतीते अक्षरं तमसि श्रीरामाज्ञानरूपे तन्महत्तम: श्रीरामनामाभिन्न लोकप्रकाशान्तर्यामिरूपे ब्रह्मणि च लीयते इत्येवं चराचरस्य जगतोऽत्र लयदर्शनात् तस्यैवात्त्वम् इतोऽपि परमात्मैवात्त भवति।

**प्रकरणाच्च॥१०॥**

महान्तम्विभुमात्मानं मत्वाधीरो न शोचतीति परमात्मप्रकरणाच्चात्र परमात्मैव ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे–छायातपौ ब्रह्मविदो वदन्ति पंचाग्नयो ये च त्रिनाचकेता: इत्यत्र किं बुद्धिजीवौ उत प्राणजीवौ तत्र बुद्धि प्राणयोर्भोक्तृत्वं जीवाधीनमतो न तावत्र निर्दिष्टौ।

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्य: पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति॥**

श्रुत्यन्तरे जीव परमात्मानावेव निर्दिष्टौ अत: ऋतं पिबंतावित्यत्रापि जीव परमात्मानौ गृध्रेते शुभं पिबत्यसौ नित्यं नाशुभं स हरि: पिबेत् पूर्णानंदमद्यस्यास्य चेष्टा न ज्ञायते क्वचिदिति पाद्मस्मृत्या हरे: शुभं मात्रभोक्तृत्वे

न ऋतं पिबन्तावित्यत्रापि शुभभोक्तृत्वमतो द्वा सुपर्णेत्यत्राशुभभोगनिषेध इत्यभिप्रेत्याह भगवान् सूत्रकारः।

**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥**

जीवात्मपरमात्मानौ गुहां प्रविष्टौ स्तः कुतः तद् दर्शनात् तयोर्जीवात्म परमात्मनोः श्रुतिभ्यः प्रवेशदर्शनात् एतदेव दृढ़यति।।

**विशेषणाच्च ॥१२॥**

विशेषणं च जीवात्मपरमात्मनोरेव भवति तथाहि आत्मानं रथिनं विद्धि शरीरं रथमेव चेत्यादिना परेण ग्रंथेन रथिरथरूपकल्पनया विज्ञानात्मानं जीवात्मानं रथिनं संसारमोक्षयोर्गंतृत्वेन विशेषयति सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति परमात्मानं गंतव्यत्वेन विशेषयति तस्माज्जीव परमात्मानावेवात्र निर्दिष्टाविति ननु गुहां प्रविष्टावित्यनेन एकत्रस्थित योरुभयोर्जीवेश्वरयोः कथं गंतृगंतव्येन निर्देशः किं च शरीरं रथमेव चेत्यत्र शरीररथत्वेन निरूपणं च न संभवति कुतः एतद्गुहारूपेण शरीरेण परम पदगमनासंभवात् जीवस्य तत्रोच्यते अत्र शरीरेस्थितस्यापि जीवस्य श्रीरामनामाभिन्नान्तर्य्यामिज्ञानावरकमायाविना संसरति सर्वत्र श्रीरामनामाभिन्न ब्रह्मदर्शनं भवति तदनंतरं श्रीरामप्रसादाविर्भूत षष्ठ शरीरमप्राकृतं सच्चिदानन्दमयमत्र रथत्वेन निर्दिष्टं तं रथमास्थाय वाङ्मनोगोचरातीत श्रुतितात्पर्य्यागम्य श्रीरामलोकं प्राप्नोति यदा सर्वे प्रमुच्यंते कामा यस्य हृदि स्थिताः अथ मर्त्यो मृतो भवति अत्र ब्रह्म समश्नुते इति ये विदन्ति हितं गुहायां सोऽश्नुते सर्वान्कामान् ब्रह्मणा सह विपश्चितेत्यादिश्रुतेः तस्माद्गुहां प्रविष्टान्तर्य्यामि ज्ञानेनास्यानंदमयस्य प्राप्तिर्दर्शनादत्र जीवात्म परमात्मानावेव प्रतिपादितौ इति।।

**अंतर उपपत्तेः ॥१३॥**

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति हो वाचैतदमृतमयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं चासिंचंति वर्त्मनी एव गच्छतीत्यादि श्रूयते तत्र संशयः किमयं प्रतिविंबात्माक्ष्यधिकरणे निर्दिश्यते अथवा विज्ञानात्मा उत

देवतात्मेंद्रियस्याधिष्ठाताऽथवेश्वर इति।।

**इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः**
**मनसस्तु पराबुद्धिर्बुद्धेरात्मा महान्परः।**
**महतः परमव्यक्तमव्यक्तात्पुरुषः परः**
**पुरुषान्नपरं किंचित् सा काष्ठा सा परागतिः।।**

इति श्रुत्याक्ष्यादीनामिन्द्रियाणामुत्तरोत्तराश्रयत्वेन श्रीरामनामाभिन्न प्रकाशब्रह्मण एव चेतयितृत्वमतोऽक्ष्यंतरं श्रीरामनामाभिन्नब्रह्मैव कुतः उपपत्तेः अमृतत्वनिर्लेपत्वाऽभयत्वसंपद्वामत्वादीनां धर्माणां तत्रैवोपपत्तेः श्रुत्यर्थस्तु इंद्रियेभ्यः अर्थाः शब्दादयः पराः श्रेष्ठाः अर्थेभ्यः शब्दादिभ्यः परमुत्कृष्टं मनः मनसः संकल्पविकल्परूपा बुद्धिः पराबुद्धिः निश्चयात्मिकायाः पर आत्मा जीवः जीवाच्च महान् महत्तत्व कारणं प्रधानं महतः प्रधानात् परमव्यक्तं प्रकाशब्रह्म प्रकाश ब्रह्मणस्तदाधारत्वेन पर उत्कृष्टः पुरुषः प्रकाशी श्रीरामचन्द्रस्तस्मान्नान्यं किंचित्परं यः सः सा काष्ठा उत्कृष्टावधिः परागतिरुत्कृष्टं प्राप्यमिति परं चावाङ्मनसगोचरातीतं प्रकाशिनो द्विभुजस्यापिपितृत्वेन ग्रह इतोऽपि परमात्मैवाक्षिस्थः संयाति कर्म फलति यस्मात् संपश्यामः।।

### स्थानादिव्यपदेशाच्च ।।१४।।

न ह्यक्षिस्थ एव परमात्मा कुतः स्थानादिव्यपदेशात् तदन्तरस्य सर्वस्य तु सर्वस्य बाह्यतः इति श्रुत्या **सर्वतः पाणिपादं तत्सर्वतोक्षि-शिरोमुखं। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठती**तिभगवद् वाक्याच्च सर्वस्थानेषु तस्यैवावस्थानकथनात् आदिपदेन स्थानाब्दहिरप्यस्ति चकारात्तत्स्था-नस्थितस्य परस्य ब्रह्मणो नियमनमुच्यते नन्वन्धपुरुषनेत्रयोर्नष्टत्वात् तत्र कथं प्रकाशब्रह्मोपासनमिति चेदुच्यते नेत्रगोलकनाशे तस्य दृश्यत्वेऽपि तदधिष्ठातृ सूर्य्यांतर्य्यामिपुरुषस्य नित्यं सर्वव्यापकत्वात्तदुपासनं भवति **एक एव हि भूतात्मा भूतेभूते व्यवस्थितः। एकधा वहुधा चैव दृश्यते जलचन्द्रवदिति** श्रुतेः जलचन्द्रवदिति दृष्टान्तेन सर्वभावस्थितस्य प्रकाश

ब्रह्मणो नित्यसत्वात् उपासनं युक्तमेव यथैकस्यान्धस्य नेत्रयोर्विनाशेऽपि अन्यथाक्षिषु पुरुषस्य सत्वादक्षिस्थ पुरुषो न विरुद्ध्यते न हन्यते हन्यमाने शरीरे इत्यादि प्रामाण्यात् जीवस्यैवाविनाशित्वं चेत्कुतस्तरां प्रकाशब्रह्मणेना-विनाशित्वमिति नन्वेवं परब्रह्मणः अक्ष्यादि सर्वस्थान सम्बन्धे सति तद्गता दोषाः ब्रह्मण्यपि भवेयुरिति परिहरन्नाह भगवान् सूत्रकारः।

**सुखविशिष्टाभिधानादेव च ॥१५॥**

चकारोऽप्यर्थः प्राणो ब्रह्मकं ब्रह्मखं ब्रह्मयदेयकं तदेव खं इतीह प्रकरणे ब्रह्मणः सुखस्वरूपाभिधानात् आनन्दं ब्रह्मणः विद्वान् न विभेति कुतश्चनेति प्रकरणान्तरश्रुत्या ब्रह्मणः सुखविशिष्ट प्रतिपादनादपि न ब्रह्मणि दोषसंभावनातोक्षिस्थः परमात्मैव सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्य इत्यादि श्रुतेः।।

**श्रुतोपनिषत्कगत्यभिधानाच्च ॥१६॥**

यदु चैवाज्ञानिनि अस्मिच्छव्यं कुर्वंति यदिहानार्चिषमेवाभि संभवंत्यर्चिषोरह अह्न आपूर्यमान शुक्लपक्षमापूर्य्यमाण पक्षाद्याम् षडुदङ्गेति मासान् मासेभ्यः संवत्सरं सवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः एतान्मुमुक्षून् ब्रह्म गमयति इत्येष देवपथो ब्रह्म पथ एतेन प्रतिपाद्यमाना इदं मानवमावर्त्तनावर्त्तन्ते नावर्तंते इति ज्ञानिनः शव्यं कर्म शवसंबंधि कर्मकरणेऽकरणे वा इहैव षष्ठशरीरं प्राप्य सद्यो मुक्तिर्भवति (क्रममुक्तिर्भवति) अर्चिरादिनेवेत्यर्थः यदरण्यायनमित्याचक्षते ब्रह्मचर्य्यमेव तत् अरश्चावैण्यश्चार्णवौ ब्रह्मलोकतृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थसोमसवनस्तदपराजिता पूर्ब्रह्मण इति अथोत्तरेण तपसा ब्रह्मचर्येण विद्ययात्मात्मनमन्विष्यादित्यमुपजायन्ते एतद्वै प्राणानामायतनमे तदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्यादि श्रुतेः श्रुतोपनिषत्कस्य श्रीरामनामाभिन्न प्रकाशान्तर्य्यामि ब्रह्मविदः उपासकस्य वाङ्मनोगोचरातीता-पराजिताख्यब्रह्म लोकपर्य्यन्तगत्यमिधानात् अक्ष्यन्तरः पुरुषः परमात्मैवेति।।

**अनवस्थितेरसंभवाच्च नेतरः ॥१७॥**

अक्षिणि वर्तमानः प्रतिबिम्बात्मा पुरुष उपास्य इति चेन्न कुतः अनवस्थितेः तस्य पुरुषान्तरसन्निधानायतस्थितेः परिच्छिन्नत्वेन सदानवस्थानात् जीवस्याक्ष्णोः हृदयस्थितस्य चक्षुष्यसंभवान्नोपास्यत्वं यद्युच्येत् इन्द्रियाधिष्ठातृ देवता सूर्य उपास्य इति तर्हि सूर्यस्यापि चक्षुषि देवान्तर इति स्यात् अस्त्विति चेन्न तथाप्यत्यंतस्याप्यन्य इति अनवस्था दोष प्रसंगात् अतः सर्वगतत्वामृतत्वादीनामन्यत्रासंभवात् श्रीरामनामाभिन्नब्रह्मण्यसाधारण गुणानां सत्वाच्च। यद्ब्रह्मसर्वत्र परिपूर्णंतदेवाक्षिपुरुषस्तेनापि निर्दिष्टमिति न प्रतिबिंबादि य एव विग्रहो व्यापी परिच्छिन्नः स एव हि इत्यादिवचनात् ननु य एषो अन्तराक्षिणि पुरुषो दृश्यत इत्यत्र एष इत्यंगुल्या निर्दिश्यत इत्यपरोक्षस्योपास्यत्वं प्रति परोक्षत्वं च प्रतिबिबस्यैव संभातम् परमात्मन इति चेन्न। यतोऽत्र एव शास्त्रदृष्ट्यप्रकाशब्रह्मणो अपरोक्षतया निर्देशः तात्पर्यवृत्या च वाङ्मनो-गोचरातीतप्रकाशिनं श्रीरामचन्द्रश्रुतिः प्रतिपादयति तस्मात् श्रीरामनामाभिन्न-प्रकाशरूप ब्रह्मचिद्विग्रहत्वेनोपास्यमिति सिद्धम्। चैतन्यदेवेन्द्रियसंयोगे-नाक्षिकनीनिकायां यः प्रतिबिम्बाद्यतिरिक्तचेतनः पुरुषो दृश्यते तच्छरीरि श्रीरामनामाभिन्नं ब्रह्मैवोपास्यमिति एष इति शास्त्रदृष्ट्या प्रकाश ब्रह्मणोऽपरोक्षतया निर्देशः तात्पर्यवृत्या च वाङ्मनो गोचरातीत प्रकाशिनं श्रीरामचन्द्रं श्रुतिः प्रतिपादयति तस्माच्छ्रीरामनामाभिन्न प्रकाशरूप ब्रह्मचिदचिद्विग्रहत्वेनोपास्यमिति सिद्धम् अमृतत्वसर्वगतत्वेनाक्ष्यन्तरोऽन्तर्यामीति प्रतिपादितम् न जायते म्रियते वा विपश्चिदिति श्रुत्या न जायते म्रियते वा कदाचिदिति स्मृत्या च घटसंवृतमाकाशं लीयमाने घटे यथा घटो लीयेत नाकाशं तद्वज्जीवो नभोपम इति श्रुत्याऽमृतत्वसर्वगतत्वादयो धर्म्माजीवेऽपि सन्त्यतो जीव एवान्तर्य्यामी कुतो न इत्यत आह भगवान् सूत्रकारः।

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्॥१८॥**

यः पृथिव्यां तिष्ठन्निति यः सर्वेषु भूतेषु तिष्ठन्निति यः प्राणेषु तिष्ठति यः आत्मनि तिष्ठन्नित्येतेष्वधि दैवादिवाक्येषु अन्तर्य्यामी परमात्मैव कुतः जीवाद्यन्तर्य्यामिधर्म व्यपदेशात् नित्यः सर्वगतः स्थाणुरिति स्मृत्या

एषोऽणुरात्मा चेतसा नेदितव्यो यस्मिन् प्राणः पंचधा संविवेश इति श्रुतिस्मृतिभ्यां अणुत्व जीवसमूहत्वेन सर्वगतत्वं जीवस्य शरीरनाशे जीवसमूहंप्राप्नोत्येतावतैवाकाशोपमत्वं मुक्तावस्थाप्रतिपादका श्रुतिरिति कथने तु शरीरनाशमात्रस्य कारणत्वे नास्तिकतापत्तिः न जायते म्रियते वेतिश्रुतिस्तु जीवस्य स्व स्वरूपं प्रतिपादनपरा प्रधानस्य सर्वगतत्वे न विभुत्वात् सर्वकार्यविकारकारणत्वे न नियंतृत्वाच्च सांख्यपरिकल्पितं प्रधानं सर्वान्तर्यामि कुतो न तत्राह भगवान् सूत्रकारः

**न च स्मार्तमतद्धर्माभिलापात्॥१९॥**

स्मार्तस्मृत्युक्तं प्रधानं नान्तर्यामि कुतः प्रधाने माया नियमनाद्यन्तर्य्यामि धर्माभिलाषाभावात् तथा च गौरनाद्यन्तवतीति नित्या बिम्बी च प्रकृतिरिति श्रुतिसूत्राभ्यां जडप्रधानस्य नित्यत्वेऽन्तः प्रवेशे च सत्यपि जडत्वेन नियन्तृत्वाभावान्तर्य्यामित्वम् अन्तः प्रविश्य नियंतृत्वमित्यन्तर्य्यामित्वमिति तल्लक्षणात्। न च चेतनप्रकृतेरन्तर्य्यामित्वमस्त्विति वाच्यं तस्या मायानियमनाभावात्।

**ननु-**
**या मुक्तिहेतुरविचिन्त्य महाव्रता त्व**
**मभ्यस्यसे सुनियतेन्द्रियतत्वसारैः।**
**मोक्षार्थिभिर्मुनिभिरस्त समस्त दोषै**
**र्विद्यासि सा भगवती परमा हि देवि॥**
**सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते।**
**भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तुते॥**

इत्यादि प्रामाण्यात् चेतनप्रकृतेर्मुक्तिहेतुत्वं स्मर्यते अतस्तस्या एवान्तर्यामित्वमिति चेच्छृणु **सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति** इति तव ज्ञानं भविष्यतीति समाधिनामकं वैश्यं प्रत्युक्तत्वमिति श्रीरामनामाभिन्नान्तर्य्यामि प्रकाश ब्रह्मज्ञानोपदेशद्वारा मोक्ष प्रदातृत्वम् ननु सर्वस्य रूपे सर्वेशे इत्यादि।

**यस्याः प्रभावमतुलं भगवाननन्तो**
**ब्रह्मा हरश्च नहि वक्तुमलं वलञ्च।**
**सा चण्डिकाखिल जगत्परिपालनाय**
**नाशाय चाशुभभयस्य मतिं करोतु।।**
**हेतुः समस्तजगतां त्रिगुणापिदोषै**
**र्नज्ञायसे हरिहरादिभिरप्यपारेति।।**
**त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत्**
**त्वयै तत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा।।**

इत्यादि वाक्यैस्तस्या एव जगत्कारणत्वं सर्वनियंतृत्वं चेति चेदुच्यते विद्याविद्ये ईशते यस्तु सोऽन्यः इति

**विद्याविद्ये मम तनू विद्धयुद्धव शरीरिणाम्।**
**वन्धमोक्षकरी आद्ये मायया मे विनिर्मिते।।**

इत्यादि श्रुतिस्मृतिभ्यः श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मण एव तच्छरीरित्वेन तदन्तर्य्यामित्वं तत्साहित्येन जगत्कारणत्वं च न तु प्रकृतेः प्रकाशब्रह्मान्तर्य्यामित्वं कुत्रापि श्रूयते स्मर्यते च य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति यं आत्मा न वेद यस्यात्मा शरीरं यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यमयति यं पृथिवी न वेद यस्य पृथिवी शरीरमित्यादि योऽव्यक्तमंतरसंचरनयमव्यक्तं शरीरं योऽव्यक्तमंतरं यमयतीति श्रुतिस्मृतिभ्यः श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशबह्मण एव चिदचिद्विग्रहत्वे सर्वान्तर्य्यामित्वम् ननु चेतनप्रकृतेः।

**व्यामोहाय चराचरस्य जगतस्ते ते पुराणागमा**
**स्तां तामेव हि देवतां परमिकां जल्पन्तु कल्पावधि।**
**सिद्धान्ते पुनरेक एव भगवान् विष्णुस्समस्तागमः**
**व्यापारेषु विवेचनव्यतिकर नीतेषु निश्चीयते।।**

इति पद्मपुराणीयस्मृतेः। नन्वणुचैतन्यं विभु चैतन्यं ब्रह्मणे जीवस्य च भेदकमस्तु विभुचैतन्यायाः प्रकृते र्ब्रह्मणश्च किं भेदकमिति चेदुच्यते

हेतुः समस्तजगतां त्रिगुणापिदोषैर्नज्ञायसे इत्यनेन। त्रिगुणमयत्वं तस्याः श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मणस्तु साक्षी चेता केवलो निर्गुणश्चेत्यादि श्रुतेः प्रधानरूपचितः सकाशाद्ब्रह्मरूपचितो निर्गुणत्वेन भिन्नत्वमेव तस्या निर्गुणत्वाङ्गीकारेऽपि ब्रह्माधीनत्वेन ब्रह्मणः स्वतंत्रत्वेन च भिन्नत्वमिति मायां तु प्रकृतिं विद्यान्मायिनंतु महेश्वरमितिश्रुतेः तस्मात्प्रकाशब्रह्मण एव सर्वान्तर्य्यामित्वं अनादिमायया सुप्तो यदा जीवो प्रबुद्ध्यते अजमनिद्रम स्वप्नमद्वैतं बुद्ध्यते तदेति श्रुत्या मुक्तस्य जीवस्य संभवतीत्यत ब्रह्मत्वेनान्तर्यामित्वं कुतोऽतः आह भगवान् सूत्रकारः।।

**शारीरश्चोभयोऽपि हि भेदेनैनमधीयते।।२०।।**

शारीरो नान्तर्य्यामी कुतः हि यस्मादुभये काण्वमाध्यंदिनाः एकं जीवमन्तर्य्यामिनो भेदेनाधीयते यो विज्ञाने तिष्ठन्निति काण्व य आत्मनि तिष्ठन्निति माध्यंदिनाः य एतैः सप्त चत्वारिंशन्मंत्रैर्नित्यं स्तौति तस्य स्तुतो देवः प्रीतो भवति तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति सोऽमृतत्वं गच्छतीति श्रुत्या जीवान्तर्यामिणोर्भेद एव यदि ब्रह्माहमस्मि इत्यादि श्रुत्याह नैवान्तर्य्यामीत्युच्येत तर्हि ईश्वरोऽहमहं भोगिसिद्धोऽहं बलवान्सुखीत्यादिषु यथा दैत्यप्रकृतीनामनिष्टप्राप्तिस्तथा तेषामपि तथा च स्कन्द पुराणीय पुरुषोत्तममाहात्म्य स्मृतिः **नानुव्रजति यो मोहाद्व्रजन्तं जगदीश्वरं। ज्ञानाग्निदग्धकर्मापि स भवेद्ब्रह्मराक्षसः** इति **दास्यादिभावसंबंधो न श्रीरामे परात्मनि। श्मशान तुल्य देहानां न तेषां दर्शनं वरम्। निर्मुक्ता न भवेयुस्ते संसारात्कल्पकोटिभिः** इति यामलस्मृतिश्च तथा च यदा जीव प्रबुध्यते इत्यत्रान्तर्य्यामिज्ञानादेव प्रवोचः चिदचिद्विग्रह भावनयैव ब्रह्माहमस्मीति आदि श्रुतीनां संगतिश्च ननु भेदस्यैवान्तर्य्यामित्वे नियामकत्वं चेत्तर्हि जीवेश्वर प्रधानानां परस्परं भिन्नानां विशेषेण नियामकत्वं नियामकत्वेन चोपास्यत्वं किन्न स्यादित्याह भगवान् सूत्रकारः।

**अदृश्यत्वादिगुणको धर्मोक्तेः ॥२१॥**

अथर्वणे अथ परा यया तदक्षरमधिगम्यते यत्तत्तद्देश्यमग्राह्यगोत्रम वर्णं यः चक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्यक्तं यद्भूतयोनिं परिपश्यन्ति धीरा इति श्रुत्याऽदृश्यत्वादि गुणकः श्रीरामानामाभिन्न प्रकाशब्रह्मरूपान्तर्य्याम्येव न तु जीवः प्रधानं वा कुतः धर्मोक्तेः यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तप इत्यादि न सर्वज्ञत्वादि परमात्मधर्मोक्तेरन्तर्बाह्या प्रत्यक्षत्वाच्च जीवप्रधानयोर्यो न नियामकत्वमुपास्यत्वमदृश्यत्वादि गुणकत्वं च सत्वात्संजायते ज्ञानमिति स्मृत्या प्रधानस्य सर्वज्ञत्वं तत्सम्बधाज्जीवस्यापि सर्वज्ञत्वं तेन चोपास्यत्वं किन्न स्यादित्यत आह भगवान् सूत्रकारः–

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥२२॥**

दिव्यो ह्यमूर्तः पुरुषः स बाह्यान्तरो ह्यजः अप्राणाः ह्यमनाः शुभ्रः अक्षरात्परतः पर इतिश्रुत्युक्तविशेषणभेदव्यपदेशान्नेतरौ प्रधानजीवावुपास्याविति प्रवेशिनापि हि प्रकाश्यप्रधानात् पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयति। एकविज्ञानेन सर्वविज्ञानोपादनादिभिरित्यर्थः तथा च ताभ्यामस्याक्षरस्य भेदात् परतः अक्षरात्परतः पर इत्यादिना। ब्रह्माहमस्मीति सोहमहं सः अहं वै त्वमसि भगवो देवते त्वं वा अहमस्मि भगवो देवते इत्यादि श्रुतिभिरभेदेनोपास्यत्वं कुतो नेति चेदुच्यते अभेदेन यदज्ञानं तत् शुद्ध सात्विकं तत्पर्य्यन्तं मायिकत्वमेव तदनन्तरं द्विभुजप्रकाशब्रह्मनिष्ठं यदज्ञानं भवति तन्निगुर्णमेव कैवल्यं सात्विकज्ञानं रजोवैकल्पिकं तु यत् प्राकृतं तामसं ज्ञानमनिष्टं निर्गुणं स्मृतमिति स्मृतेः तस्माच्छ्रुतयोः ब्रह्मभावनादर्शन पराः वास्तवस्तु भेद एव इतश्च अदृश्यत्वादिगुणकः परमात्मैवेत्याह रूपोपभासाच्च। अग्नि र्मूर्च्छा चक्षुषी चन्द्र सूर्य्यावित्यादावीदृशं रूपं सर्वभुजांतरात्मनः परमात्मन एव संभवतीति परमात्मैवाऽदृश्यत्वादिगुणकः। ननु अदृश्यत्वादि गुणस्यान्तर्य्यामिनः अग्नेर्मूर्छेत्यादिनामूर्तत्वं शरीरत्वं दिव्यो ह्यमूर्त इत्यादिषु अमूर्तत्वं चेत्युभयं विरुध्यते इति चेदुच्यते (अक्षरात्परतः पर इत्यनन्तरं एतस्माज्जायते प्राणइति प्राणप्रभृतीनां पृथिवी पर्यान्तानां सर्गमुक्ता तस्यैव भूतयोनेः सर्वविकारात्मकं विश्वरूपमुपन्यस्य)

अतर्य्यामिनः सर्वरूपत्वं न विरुध्यते भावनानुसारेण सर्वरूपाणामाविर्भावसंभवात्। अंतर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितिः इतिश्रुतिप्रतिपादित श्रीरामनामाभिन्नप्रकाशब्रह्मणः सर्वत्र व्यापकस्य रूपासंभवात् व्यापकत्वेनास्त्यत्वमपि तस्यादिव्यगुणविशिष्टस्य गुणरूपदर्शकत्वमेव परास्य शक्तिरित्यादि श्रुतिवाक्यस्य बृहदारण्यके मूर्तामूर्तरूपद्वयोपमासानंतरमथात आ.........वाच्यवृत्या प्रकाशिश्च तात्पर्यमूर्तामूर्त विलक्षणं रूपमुपन्यस्तंतच्च. ..........वसिष्ठ मेवअस्य...........नंद संहितायामुक्तः। (अत्र लुप्तपत्राणिसन्ति।)

पुच्छं प्रतिष्ठेति तत्र सत्यं ज्ञानमनन्तं ब्रह्मेति यत्प्रकृतं तदिह प्रकाशिनः प्रकाशत्वेन ब्रह्मपुच्छं प्रतिष्ठेत्युच्यते अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजेति श्रीमद्रामायणात्–

**एकं चापि परं समस्त जगतां ज्योतिर्मयं कारणं**
**प्रागन्ते च विकार शून्यमगुणं निर्नामरूपं च यत्।**
**तच्छ्रीरामपदारविन्दनखरप्रान्तस्य तेजोमलं,**
**प्राज्ञा वेदविदो वदन्ति परमं तत्वं परं नास्त्यतः॥**

इति पारमहंस्यपरम सिद्धान्त संहितावाक्याच्च तस्य प्रियमेव शिर इत्यादि श्रुत्युपवृंहण रूपा वृहत्संहितायां स्मृतिरपि शिरोनारायणः पक्षः उत्तरः सव्य एव चः–

**प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः।**
**नारायणोऽथ संदोहो वासुदेवः शिरोऽपि च॥**

**पुच्छं संकर्षणः प्रोक्तो एक एव तु पञ्चधा।**
**अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तम इति॥**
**धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि।**
**पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणमिति।**

---

१. इसके बाद के पाण्डुलिपि के पृष्ठ १६८, १६९ एवं १७० नष्ट हैं जो पढ़े ही नही जा सके। रुपोपन्यासाच्च यह २३ सूत्रभाष्य भी इसी से अप्राप्त है।

लक्ष्मण शपथवाक्यात् पुरुषो नरस्तस्येदं पौरुषं वीर्य्यं तस्मिन्नित्यर्थः आत्मा वा इदमेक एवाग्रासीत् पुरुषविध इति श्रुतेः आत्मा नराकृतिरिति स्मृतेश्च वन्दे महापुरुष ते चरणारविन्दमिति भागवतोक्तेश्च वाङ्मनो गोचरातीत प्रकाशिनः परमपुरुषस्य तात्पर्यगम्यस्य द्विभुजत्वमेवेति (श्रीरामस्यैतदाश्रयत्वेन तेषामन्तर्यामित्वमिति) सिद्धम् ननु प्रकाशक-प्रकाशिनोरुभयोरपि द्विभुजरूपत्वमुपपादितं तत्र प्रकाश प्रकाशिनोः सर्वलक्षणसाम्यात्सर्वथाऽभेद एव किमिति नोच्यते किमर्थं तादात्म्यमनयोरुच्यते इति चेच्छृणु नारायणादि रूप कल्पनं श्रीरामानामाभिन्नान्तर्य्यामिप्रकाशब्रह्मण एव वाङ्मनोगोचरातीतप्रकाशि श्रीरामस्वरूपं तु साकेते रास विहारि महाराज रूपमेव–

**तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्।**
**पतिं पतीनां परमं परस्ताद्विंदामि देवं भुवनेशमीड्यम्॥**

इति श्वेताश्वतरोपनिषच्छ्रुतेः–

**स ईश्वराणां परमो महेश्वरः पतिः पतीनां परमं च दैवतं।**
**अमूर्त मूर्त्तादिशरीरकोऽसौ कर्त्ताऽप्यकर्त्ता च न संग युक्तः।**

**प्राप्नोति सर्वं निजतेजसा यो अणोरणीयान्महतः परस्तात्।**
**मूर्तेन सर्वं निर्माय विश्वं स्वयं तु लीलां वितनोति नित्याम्॥**

**द्वयोः शरीरयोरैक्यमतोऽद्वैतं बुधा जगुः।**
**निस्सामाभ्यधिकत्वाच्च तदद्वैतं वभाषिरे॥**

**सर्वावतारलीलाञ्च करोति सगुणेन यः।**
**अयोध्यायां स्वयं रामो रास एव करोति सः॥**

इति विश्वंभरोपनिषच्छ्रुतेः

**राजाऽधिराजः सर्वेषां ब्रह्मविष्णुमयो महान्।**
**ईश्वरं तं विजानीमः स पिता प्रपितामह॥**

इत्यथर्वणीय श्रुतेश्च–

**श्रीरामचन्द्र रघुपुंगव राजवर्य राजेन्द्र राम रघुनायक राघवेश। राजाधिराज रघुनन्दन रामभद्र दासोऽहमद्य भवतः शरणागतोऽस्मी**ति। सनत्कुमार-संहितास्मृतेश्च। प्रकाशब्रह्मणस्तादात्म्यमेव प्रकाशिनेति प्रकाशिनोऽन्तर्यामित्वेन राजरूपत्वं अवच्छिन्ननित्यरासविहारित्वं चास्ति बहुरूपकल्पनाभावश्चैतदेव वैलक्षण्यं ननु प्रकाश प्रकाशिनोः साकारत्ववर्णनेन यत्तद्देश्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादमित्यादि श्रुतयो विरुद्धेरन्निति चेद्दृश्यो भवतीति दृश्यत्वमदृश्यत्वं न च विरुद्धं नन्वनेकश्रुतिषु वाच्य वृत्यैव वर्णनात् कथंतात्पर्य्य गोचरत्वमिति चेदुच्यते तात्पर्य्यविषय विशेषस्य वाच्यवृत्या वोधयितुमशक्यत्वेन तात्पर्य्यवृत्तेरावश्यकत्वात् तथा च नराकृतिरिति अस्यानिर्वचनीय नराकृतिरनुपमत्वात् एवं सर्वत्र विलक्षण बुद्धिभिरुक्तत्वात्। को न आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषितमेव नोब्रूहि इति चोपक्रम्य यस्त्वेतमेव प्रादेशमात्रमभिविमानम् अभितः विशेषेण मानंप्रमाणं आत्मानं वैश्वानरमुपास्ते स सर्वलोकेषु भूतेषु सर्वेषु आत्मसुअन्नमत्तीतिच्छान्दोग्येश्रूयतेतत्र किं वैश्वानर शद्बेन जाठरोऽग्निउतभूताग्निरुतगार्हपत्यो जज्ञे मुख्याग्निः आहोस्वित्प्रकाशब्रह्मेति संशये प्रकाशब्रह्मैव वैश्वानरइत्याह भगवान् सूत्रकारः—

**वैश्वानरः साधारणशब्दविशेषात्॥२४॥**

वैश्वानरः परमात्मैव कुतः साधारणशब्द विशेषात् तस्य बहवो एतस्मादात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चाक्षुर्विश्वरूपः प्राणः पृथग्वर्त्यासंदेहो बहुलो वास्ति रवेरपि पृथिव्येव पादांशुरेव वेदवेदासौभान्विवहिहृदयं गार्हपत्यो मनोन्वाहार्वचं नः आस्यमाहवनीय इति परमात्मसाधारणैर्धर्मविशेषणात् जाठराग्न्यादिषु वैश्वानर शब्दस्य साधारणत्वेऽपि तस्य मूर्द्धैव सुतेजा इत्यादि परमात्मसाधारणधर्मैर्विशेषणात् शब्दविशेषात् श्रीरामनामाभिन्न प्रकाशब्रह्मैव वैश्वानर इति विश्वे सर्वे नराः जीवाः नियमत्वेनास्य संतीति विश्वानरः विश्वानरश्च इति व्युत्पत्तेश्च वैश्वानर शब्दवाच्यं प्रकाशरूपं ब्रह्मैव एतदेव दृढयति—

**स्मर्यमाणमनुमानं स्यादिति॥ २५॥**

इतश्च परमात्मैव वैश्वानरः यस्मात्परमेश्वरस्यैवाग्निरास्यतीह शं रूपं सर्वभुवनात्मकं स्मर्यते **यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः। सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नम** इत्यादिना यस्मादिदं रूपं स्मर्यमाणमनुमानं स्यात् परमात्मज्ञापक लिंगं स्यात् तस्माद्वैश्वानरः परमात्मैव परमात्मन एव वैश्वानर शब्देन उपास्यत्वश्रवणात् श्रीरामनामाभिन्नप्रकाशरूपं ब्रह्मवैश्वानर शब्देन उपास्यत्वश्रवणात् श्रीरामनामाभिन्नप्रकाशरूपं ब्रह्मवैश्वानर शब्दवाच्यमित्युपपादितमिदानीं प्रकाशरूपब्रह्मोपासनया प्रकाशिनः प्राप्तिरिति तस्य वैश्वानर शब्दतात्पर्य विषयत्वं पुरुषविधत्वेनेति दर्शयन्नेव पुरुषविधत्वेनाह भगवान् सूत्रकारः।

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्चेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते॥ २६॥**

परमेश्वरो न वैश्वानरः स कुतः शब्दादिभ्यः शब्दस्तावद्वैश्वानरशब्दो न परमेश्वरे सम्भवति अर्थान्तरे रूढत्वात् यथाग्निशब्दः स एषोऽग्निर्वैश्वानर इति आदिशब्दात् हृदयं गार्हपत्या इत्यग्नित्रेता प्रकल्पनं तद्धयभक्तं प्रमथमागच्छेत्तद्धामीय प्रतिष्ठितमिति पुरुषोऽन्तःस्थमित्यादिना प्राणाहुत्यधिकरणात् संकीर्तनं पुरुषोऽन्तः प्रतिष्ठितं इति पुरुषेऽन्तः प्रतिष्ठानाच्च। तथा जाठराग्न्यवच्छिन्ने प्रकाशब्रह्मणि दृष्ट्युपदेशात् हानोपदेशाज्जाठराग्निः त्रैलोक्यशरीरत्वाद्यसंभवाज्जाठरोऽग्निरेवोपास्येति चेन्न तथा दृष्ट्युपदेशात् तात्पर्य्यवृत्या सर्वान्तर्य्यामिनोऽप्यन्तर्य्यामिद्विभुजपरमपुरुषश्रीरामदृष्ट्युपदेशात् जाठरोऽग्नेस्त्रैलोक्यंशरीरत्वाद्यसंभवाच्च अन्तर्यामिण एव तत्संभवाच्च एनं प्रकाशपुरुषमभिधीयते वैश्वानर शब्दस्य पुरुषपदार्थे परमद्विभुजे प्रकाशिनि तात्पर्य्यमुन्नीयते यो वै श्रीरामचन्द्रस्स भगवान् परमपुरुष इति पुरुषान्नापरा किंचित्सा काष्ठा सा परागतिरित्यादिषु च एषोग्निरित्यस्याग्न्यत्वादग्निनामासौ भगवान् हरिरीश्वर इति स्मृत्याग्निशब्देन प्रकाशरूपं ब्रह्मैव विशति प्रविशतीति सर्वान्तर्य्यामिरूपेणेति विश्वः सर्वान्तर्य्यामिरूपेण प्रतिष्ठो नरः द्विभुजः स विश्वानरः स एव वैश्वानरः सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोःप्रभुः। इति रामायण वाक्यात् अग्नेरग्निरिति अस्य सर्वनियंतुरपि नियंतेति व्याख्यातं

भूषणकारैरपि तस्माज्जाठरोऽग्नेरुपास्यत्वासंभवात् विश्वानराग्निशब्देन प्रकाशरूपसर्वान्तर्य्यामिणोऽप्यन्तर्य्यामी पुरुषविधः श्रीराम एवोपास्य इति भागवतो व्यासस्य सिद्धान्तः तात्पर्य वृत्ति विषयत्वं तु पुरुषविधत्वेनेति बोध्यम्।

**अतएव न देवता भूतञ्च॥ २७॥**

उक्तप्रकारादेव यतो वैश्वानरशब्देन श्रीरामनामाभिन्न प्रकाशब्रह्मो-पासनया प्रकाशिनः श्रीरामस्योपासना संघटिताभवत्यत एव नाग्न्यभिमा-निदेवतोपास्या नापि भूतमुपास्यमिति–

**साक्षादप्यविरोधं जैमिनिः॥ २८॥**

अग्निवैश्वानर शब्दयोरुक्तार्थप्रतिपादनेन साक्षादग्नि वैश्वानर शब्देन प्रकाशब्रह्मणोऽभिधानादप्यविरोधं जैमिनिराचार्य्यो मन्यते ननु श्रीरामनामाभिन्न प्रकाशब्रह्मणो व्यापकत्वात्तस्य प्रादेशमात्रत्वं कथमिति चेत्तत्राह भगवान् सूत्रकारः।

**अभिव्यक्तेरित्याश्मरथ्यः॥ २९॥**

प्रादेशमात्रे हृदयप्रदेशे परब्रह्मणोऽभिव्यक्तेः प्रादुर्भावात् प्रादेशमात्रत्वमित्याश्ममरथ्यो मन्यते प्रादेशमात्रे हृदये परब्रह्मणः प्रादुर्भावे परिच्छिन्नत्वमेव स्यादिति परिहरन्नाह भगवान् सूत्रकारः।

**अनुस्मृतेर्बादरिः॥ ३०॥**

सर्वत्र पूर्णस्य ब्रह्मणो हृदयप्रदेशमनसास्मरणमात्रेणैव प्रादेशमात्र-त्वमितिबादरिर्मन्यते परब्रह्मणः स्मरणमात्रेण परिमितत्वे तद्रूपस्य काल्पनिकत्वं स्यादिति परिहरन्नाह भगवान् सूत्रकारः–

**संपत्तेरिति जैमिनिस्तथाहि दर्शयति॥ ३१॥**

व्यापकस्य ब्रह्मणो यत्प्रादेशमात्रत्वं तत्संपत्तेः अचिन्त्यशक्तियोगात् नत्वौपाधिकं इति जैमिनिर्मन्यते हि यतः एकोऽपि सन् बहुधा यो विभातीति

विचार: श्रुतिस्तथा दर्शयति वैश्वानरमुपसंहरन्नाह भगवान् सूत्रकार:—

**आमनन्ति चैनमस्मिन्॥ ३२॥**

अस्मिन्नन्तर्यामिनि एवं परमपुरुषं वाङ्मनोगोचरातीतं श्रीरामं आमनंत्यभ्यस्यंति श्रुतय: तथा अमूर्तमूर्तादि शरीरकोशौ कर्त्ताप्यकर्ता च न संगयुक्त: इति विश्वंभरोपनिषदि यो वै श्रीरामचंद्र: स भगवान् अद्वैतपरमानन्दात्मा य: परं ब्रह्मेति रामोत्तरतापिन्याम् तस्मात्तात्पर्यवृत्या वाङ्मनोगोचरातीतपरमपुरुष श्रीरामचन्द्र एवोपास्य इति सिद्धम् इति श्रीमद्भगवदवतार वेदवेदार्थनिर्णायक श्रीमद्वेदान्तार्य्य श्रीमद्वेदव्यासकृतवेदान्त सूत्राणां सिद्धिश्रीमहाराजाधिराजश्रीमहाराजाबहादुर श्रीसीतारामचंद्र कृपापात्राधि-कारि विश्वनाथसिंहजूदेवकृतेश्रीराधावल्लभीयमतप्रकाशक भाष्ये प्रथमाध्यायस्य द्वितीय: पाद:।। २।।

# अथ श्रीराधावल्लभमत प्रकाशकं ब्रह्मसूत्र-भाष्यम्

## तृतीयः पादः

पूर्वं वाङ्मनोगोचरातीतद्विभुज श्रीराम एवोपास्य इत्युपपादितम् तस्योपास्यत्वेन कथं प्राप्तिरित्याशंक्य चेतनाचेतना विग्रह श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मोपासनया तत्प्राप्तिर्भवतीति द्युभ्वाद्यायतनत्वेन तदुपासनां प्रदर्शयन्नाह भगवान् सूत्रकारः–

**द्युभ्वाद्यायतनं स्वशब्दात्॥ १॥**

मुण्डके इदं श्रूयते यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथाऽमृतस्यैष सेतुरिति द्यौश्चभूश्चद्युभुवौद्युभुवावादिर्यस्य तदिदं द्युभ्वादिर्यदेतदस्मिन्वाक्ये द्यौः पृथिव्यंतरिक्षं मनः प्राणमित्येवमात्मकं जगदोतमत्वे निर्दिष्टं तस्यायतनं परब्रह्म भवितुमर्हति कुतः स्वशब्दात् अमृतस्यैष सेतुरिति शब्दात् सर्वत्र भावनया मनो नाशवासनाक्षयानन्तरं भगवद्दत्तशरीरं प्राप्यतेऽत्र प्राप्नोति ब्रह्मणः सेतुत्वात् ननु पारवान् हि लोके सेतुः प्रख्यातः न च ब्रह्मणः पारवत्वमभ्युपगंतुं शक्यमनन्तमपारमिति श्रवणादिति चेदुच्यते प्रकाशिनः प्राप्यत्वेन पारवत्वं प्रकाशब्रह्मणः श्रीरामप्रापकत्वे सेतुत्वमिति प्रकाशब्रह्मणोऽपारत्वं न विरुद्ध्यते इति अत्र प्रकाशिनः प्राप्यकत्वेनैव ब्रह्मणः संसारसमुद्रस्य हेतुत्वव्यपदेशः प्रकाशब्रह्मणः प्रकाशिनोरुभयोरपि सर्वं खल्विदं ब्रह्मेत्यादिश्रुतेस्सर्वस्वरूपत्वात् प्राप्यप्रापकत्वं न संगच्छते इति कथं सेतुत्वमिति तत्राह भगवान्सूत्रकारः।

**मुक्तोपसृप्यव्यपदेशात्॥ २॥**

चिदचिद्विग्रहत्वेन द्युभ्वाद्यायतनं ब्रह्मैवमुक्तैश्चिदचिद्विग्रह ज्ञानिभिरुप-सृप्यस्य प्राप्यस्य ब्रह्मणो व्यपदेशात् कथनात्–

**भिद्यते हृदय ग्रंथिः छिद्यंते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥**

इति उक्तदोषसंभवाद्विग्रहिणोर्भेदात्सेतुत्वं न विरुद्धयते नन्वस्य ब्रह्मणः प्राप्यत्वे प्रकाशिनः कथं प्राप्तिः स्यादित्युच्यते–

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥**

इति मुक्तस्य विग्रहलाभ इतिश्रुत्या तदा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति श्रुत्या च प्रकाशब्रह्मणः प्राप्तौ प्रकाशिनः स्वयंस्फूर्तिर्भवतीति अमृतो भवति मुक्तो भवति ततो ब्रह्म श्रीरामाख्यमश्नुते प्राप्नोतीत्यर्थः अत्र ब्रह्म समश्नुते इति विद्वान् परमप्रकाशब्रह्मज्ञान-वान्नामरूपाद्विमुक्त अतएवेहैव मुक्तः सन्परात्सवोत्कृष्टात्प्रकाशब्रह्मणः परं तदाधारत्वेनोत्कृष्टं वाङ्मनोगोचरातीतं दिव्यं पुरुषंश्रीराममुपैति प्राप्नोतीतिश्रुत्यर्थः प्रधानादेर्द्युभ्वाद्यायतनत्वनिरसनेनैतदेव दृढयति।।

**नानुमानमतच्छब्दात्॥ ३॥**

अनुमानं प्रधानादिद्युभ्वाद्यायतनं कुत अतच्छब्दात् अस्मिन् प्रकरणेनाचेतनाचेतनस्य वाचकः शब्दः श्रूयते अतो न प्रधानादिद्युभ्वाद्याय-तनमिति ननु प्रधानादीनामस्तु द्युभ्वाद्यायतनत्वं जीवस्य तु चेतनत्वेन द्युभ्वाद्यायतनत्वं स्यादित्यत आह भगवान् सूत्रकारः।।

**प्राणभृच्च॥ ४॥**

प्राणाज्जीवो नात्र द्युभ्वाद्यायतनत्वेनोपदिश्यते तद्वाचकशब्दा-भावादणुत्वाच्च ननु आत्मावेदं सर्वं इति श्रुत्या जीव ब्रह्मणोरभेदात्

द्युभ्वाद्यायतनत्वे न जीव एव कुतो नोपास्य इत्यत आह भगवान् सूत्रकारः–

**भेदव्यपदेशाच्च॥ ५॥**

द्युभ्वाद्यायतनत्वेन ब्रह्मैवोपास्यं कुतः तमेवैकं जानथात्मानमिति ज्ञातृज्ञेयत्वेन भेदव्यपदेशात् अतो द्युभ्वाद्यायतनत्वेन जीवो नोपास्य इति–

**प्रकरणाच्च॥ ६॥**

कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति इति ब्रह्मणः प्रकरणान्न जीवो द्युभ्वाद्यायतनत्वे नोपास्य इति–

**स्थित्यदनाभ्याञ्च॥ ७॥**

द्युभ्वाद्यायतनमिति प्रकृत्य द्वा सुपर्णा सयुजा सखाया इतिश्रुत्या संसारदशायां जीवेश्वरयोः भोक्तृत्वसाक्षित्वाभ्यां भेदनिर्देशान्न जीवा द्युभ्वाद्यायतनम् मुक्तावस्थायामपि निरंजनं परमं साम्यमुपैतीति सोऽश्नुते सर्वान् कामान् ब्रह्मणा सह विपश्चितेति ब्रह्मणा सह भोगश्रवणेन भेदनिर्देशान्न मुक्तजीवोऽपि द्युभ्वायतनं यः (च शब्दात् मुक्तावस्थायां) चेतनाचेतनयोर्भेदनिर्देशाच्च द्युभ्वायतनं श्रीरामनामाभिन्नं प्रकाशरूपं ब्रह्मैवेति सिद्धम् द्युभ्वाद्यायतनत्वात् श्रीरामनामाभिन्नब्रह्मणः जीवप्रधानादभेद इत्युक्तमिदानीं तदेव ब्रह्मभूमत्वे न निर्दिशन्नाह भगवान् सूत्रकारः।

**भूमासंप्रसादादध्युपदेशात्॥ ८॥**

छान्दोग्ये भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा अथ यत्रान्यत्पश्यत्यन्यच्च शृणोत्यन्यद्विजानाति तदल्पमित्यादि श्रुतिषु श्रीरामनामाभिन्नान्तर्य्यामिप्रकाशब्रह्मभूमानं प्राप्य तदनन्तरं वाङ्मनो गोचरातीतसाकेतलोकं प्राप्नोत्यधिकोपदेशःय एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्रापर्येति यक्षन् क्रीडन् रममाणः इत्यादिश्रुतेः ननु समष्टि रूपेण जीवस्यापि सर्वागतत्वाज्जीव एव भूमा किन्न स्यादित्यत आह भगवान् सूत्रकारः–

**धर्मोपपत्तेश्च ॥९॥**

येनाश्रुतेश्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवतीति कथं नु भगवः स आदेश इति यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नाम ध्येयं मृत्तिकेत्येव सत्यं यथा सौम्यैकेन लौहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामध्ये लोहमणिरित्येव सत्यं यथा सौम्यैकेन नखनिकृंतनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं लोहमणिरित्येव सत्यम् यथा सौम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यमिति हेतोश्च नामोपासनचिदचिद्विग्रहविशिष्टं सन्नामकमेकमद्वितीयं श्रीरामनामाभिन्नं ब्रह्मैवेदं समग्रे सृष्टेः प्रागसीदित्यादेशः तत्रैव यथायथं दृष्टान्तः यथा सौम्यैकेन कारणभूतेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं घटशरावादिकं तत्कार्यजातं विज्ञातं स्यात् घटशरावादि विविधाकारस्तु नामधेयं वाचारंभण मात्रम्। वाग्व्यवहार विषयमात्रं परमार्थतस्तु कारणभूतं रामनामेत्येव सत्यं श्रीरामनामज्ञानेन सर्वनामज्ञानं भवतीति मदीयश्रीराममन्त्रार्थे दृष्टव्यम् यथा एकेन सुवर्णपिण्डेन कारणेन विज्ञातेन सर्वंतत्कार्यजातं कटकादिविज्ञातं स्याद्वाचारंभणमित्यादि पूर्ववत् तथा येन सर्वोपासनकारणभूतेन शास्त्रादितो विचारपूतमतेन रामोपासनेनामतमन्योपासनं मतं सम्मतं स्याद्विकारो विविधाकारस्तन्नामध्येयं वाग् व्यवहार विषयमात्रं परमार्थभूतं श्रीरामो-पासनमित्येव सत्यं यथा नखनिकृन्तनोपलक्षितेन कार्ष्णायसेन तत्कार्यजातं विज्ञातं भवति समानमन्यतो तथा येन कारणभूतेन चिदचिद्विग्रहेण विज्ञातेन कार्य्यं जगद्विज्ञातं भवति विकारो विविधाकारो नामध्येयं सरित्समुद्रादिरूपं वागालंबनमात्रं परमार्थभूतं चिदचिद्रूपनित्यमेव सत्यं येनाश्रुतंभवति इत्यादि यत्र नान्यत् पश्यति नान्यच्छृणोति आदेरैकार्थ्यात् अनन्यदर्शनत्वादनन्य-श्रवणत्वादननान्यविज्ञानत्वादीनां धर्माणां श्रीरामनामाभिन्नान्तर्यामि प्रकाशरूप-भूमव्रह्मण्येवोपपत्तेर्न जीवो भूमेति पूर्वं भूमशब्दनिर्दिष्टं श्रीरामनामाभिन्नं ब्रह्मैवेत्युक्तम् ओमित्येकारं ब्रह्मेति एतदेवाक्षरं ब्रह्मेति श्रुतेः। प्रणवाक्षरश्च ब्रह्मत्वं किन्नस्यादथ जीवसमूहस्यापि अक्ष प्रधानस्यापि सर्वकारणत्वाद्

ब्रह्मत्वं किन्न स्यादित्याशंकायां कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वैतदक्षरं गार्गिब्राह्मणा अभिवदन्त्यस्थूलं मन एव ह्रस्वमदीर्घमलोहित-मस्नेहमच्छायमित्यादिश्रुतिप्रामाण्यादक्षरशब्दवाच्यं ब्रह्मैवेति प्रतिपादयन्नाह भगवान् सूत्रकारः–

**अक्षरमम्बरान्तधृतेः ॥१०॥**

एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति श्रुतिपृथिव्याद्या-काशान्तधृतोद्धारणादक्षरं ब्रह्मैव ननु ओमित्येकाक्षरं ब्रह्मेतिश्रुतेः का गतिरित्युच्यते। तस्य तद्वाचकत्वे तत्प्रापकत्वेन च ब्रह्मेतिश्रुतें कागतिरिति चेदुच्यते तस्यतद्वाचकत्वेन तत्प्रापकत्वेन च ब्रह्मत्वव्यपदेश इति प्रणवादिशब्दप्रतिपाद्यस्य श्रीरामनामाभिन्नान्तर्यामिब्रह्मणो वरान्तधारकत्वं यथा तथा प्रणवादेरपि धारकत्वं संभवात्। अकारवेदं सर्वमिति श्रुत्याक्षरत्वं किन्नस्यादित्यत आह–

**सा च प्रशासनात् ॥११॥**

सा च धृतिश्रीरामनामाभिन्नप्रकाशब्रह्मण एव ननु प्रणवादेः कुतः प्रकाशब्रह्मणः एव प्रकाशनात् एतस्य वाक्षरस्य प्रकाशने गार्ग्य सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादि विदितस्य प्रशासनस्य स्वतंत्रे सर्वाश्रये प्रकाशब्रह्मणि एव संभवात् तदपि प्रकाशि प्रकाशनादेव तत्र प्रकाशिण्यपर ब्रह्मतोंकारवाच्यं किंतात्पर्यंगार्ग्यं यतो वाचो निवर्तन्त इति श्रुतेः। ननु ओंकार एवेदं सर्वमिति वाच्यवाचकयोः तादाम्याभिप्रायेणेति गेयं पद्यं वरांतधृतिः श्रीरामाभिन्न-प्रकाशब्रह्मणः श्रीरामस्य प्रकाशिनः प्रशासनादेव तर्हि प्रकाशब्रह्मणः स्वतोम्बरान्तधृतेरभावात् ब्रह्मत्वं न स्यादित्यतः तस्य ब्रह्मत्वं प्रतिपादयन्नाह भगवान् सूत्रकारः

**अन्यभाव व्यावृत्तेश्च ॥१२॥**

अन्यभावः प्रकाशि ब्रह्मान्यत्वं तस्य व्यावृत्तेर्निरासात् प्रकाशब्रह्मणः अक्षरत्वं विरुध्यते–

**तेजोरूपं च तद्ब्रह्म ध्यायंते योगिनः सदा।**
**वैष्णवास्तन्न मन्यन्ते तद्भक्ताः सूक्ष्मबुद्धयः॥**

**तत्तेजः कस्य वाश्चर्यं ध्येयश्च पुरुषं विना।**
**कारणेन बिना कार्य्यं कुतो वा प्रभवेद्भवे इत्यादि।**
**य एव विग्रहोव्यापी परिच्छिन्नं स एव हि।**
**एकस्यैवैकदा चास्य द्विरूपत्वं विराजते।**

इति नारदपंचरात्रवाक्येन च तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टश्रुतंश्रोत्रमतो मंत्रं विज्ञातं विज्ञातृ श्रुत्या च तादात्म्येन प्रकाशब्रह्मणः प्रकाशस्यान्यत्वाभावात् प्रकाशब्रह्मणोऽक्षरब्रह्मत्वं न विरुद्ध्यते ननु प्रकाशब्रह्मणोऽपि द्विभुजत्वमित्युक्तं अत्र प्रकाशत्ववर्णनात्कथं द्विभुजत्वमिति चेच्छृणु तस्य प्रकाशत्वेऽपि द्विभुजत्वस्य वर्णितत्वाद्य एव विग्रहो व्यपरिच्छिन्नः स एव हि इत्यादिना तस्य द्विरूपत्ववर्णनाच्च प्रणवस्य ब्रह्म प्रापकत्वं पूर्वमुक्तं तत्कथं संगच्छेत्। **ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च। पंचधा पंच दैवत्यं प्रणवः परिकीर्तित**इत्यथर्वशिखोपनिषदि प्रणवस्य बहुप्रापकत्वश्रवणात् अथ हैनं सत्यकामःपप्रच्छ यो ह वै तद्भगवन् मनुष्येषु प्राणनात्तमोङ्कारमभिध्यायीत कुतः वायासते न लोकं जयति सहोवाच एतद्वै सत्यकाम परं चापरं ब्रह्मपदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति। सपद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते तमृचो मनुष्यलोकमुपनयंतस्तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति अथ यदिति विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते देवलोकं स सोमलोकं विभूतिमनुभूय पुनरावर्त्तते यः पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण परमपुरुषममिध्यायीत स तेजसि सूर्य्यसन्नः यथा पादोदारस्त्वचाविनिर्मुच्यते एवं हैव स पाप्मना विनिमक्तुः स सामभिरुन्नीयते ब्रह्मलोकं एतस्माज्जीवधनात्परात्परं पुरिशयं पुरुषमीक्षते इति प्रश्नोपनिषद्वाक्ये पुरुषपदार्थनिर्णयं कुर्वन्नाह भगवान् सूत्रकारः—

**ईक्षति कर्मव्यपदेशात्सः ॥१३॥**

यः प्रणवेणैकमात्रेण द्विमात्रेण स कामतयोपास्ते तस्य तत्तत्कामावाप्तिर्भवति यश्च निष्कामतया समस्तेन त्रिमात्रेण पुरुषमभिध्यायीत स तेजसि संपन्नः सन् ब्रह्मलोकं प्राप्तो भवति तदन्यं नरं परात्परं पुरिशयं पुरुषमीक्षते इति तत्र संशयः किंत्वत्र पुम् शब्देन हिरण्यगर्भतःनिर्गुणं

प्रकाशरूपं ब्रह्मापि तत्र प्रकाशवहनात्मना वाङ्मनसगोचरातीतं श्री राम इति वा परमेव ब्रह्मवाङ्मनोगोचरातीतं श्रीरामाख्यमभिध्यातव्यमुपदिश्यते कुतः ईक्षते कर्मव्यपदेशात् ईक्षतेदर्शनं दर्शनव्याप्यमीक्षति कर्म ईक्षति कर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशे भवति तथाहि स एतस्माज्जीवधनात् परात्परं पुरिशयं पुरुषमीक्षते इति कौषीतकी छांदोग्योपनिषदादि प्रतिपाद्यापराजितायां पुर्य्यांशेते इति पुरिशयस्तमीक्षते पश्यतीत्यर्थः तथा च एतस्माज्जीवधनात् हिरण्य गर्भान्यः ईक्षति कर्मत्वेन परमपुरुषो व्यपदिष्टः ननु तात्पर्यगम्यस्य श्रीरामस्य परात्पर पुरुषमितिवाच्यवृत्या प्रतिपादनं कथं संघटते इति चेदुच्यते श्रुतिरियं तात्पर्यवृत्या प्रणवतात्पर्यार्थं प्रतिपादयति तथाहि–

**अकाराक्षर संभूतः सौमित्रिर्विश्वभावनः।**
**उकाराक्षर संभूतः शत्रुध्नस्तेजसात्मकः।**
**प्राज्ञात्मकस्तु भरतो भकाराक्षरसंभवः।**
**अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः।**
**श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी।**
**सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता।।**
**प्रणवात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः।।**

इति अकारः प्रथमाक्षरो भवत्युकारो द्वितीयाक्षरो भवति बिन्दुः पंचमाक्षरो भवति नादः षष्ठाक्षरो भवतीति श्रीरामोपनिषदि तथा च प्रश्नोपनिषदि प्रतिपादित प्रणवत्रिमात्रासुश्रीरामोपनिषत्प्रतिपाद्यमानार्द्धमात्राणामन्तर्भाव इति तस्मादियं श्रुतिः तात्पर्यवृत्यैव वाङ्मनोगोचरातीतं श्रीरामभव परम पुरुषमीक्षति कर्मत्वेन व्यपदिशति अन्यथा–

**देवान्देवयजो यांति पितृन्यान्ति पितृव्रताः।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि मामिति।।**

भगवद्वचनं संगच्छेत। ननु भवतु ब्रह्मोपनिषद् वाक्येन तात्पर्य्यवृत्या श्रीरामस्येवेक्षति कर्मत्वेन व्यपदेशः श्रीरामोपनिषदि अकाराक्षर संभूत इत्यादिना

स्पष्टमेव वाच्यवृत्याभिधानात्कथं तात्पर्यवृत्याभिधानमिति चेच्छृणु अकाराक्षर संभूत इत्यस्याकाराक्षरात्संभूतः प्रादुर्भूतः सौमित्रिर्लक्ष्मणः नत्वकार वाच्य अकारादिवाच्य वासुदेवाद्यनुसंधानेन तात्पर्यवृत्या लक्ष्मणादयः सूचिता नत्वकारादिवाच्याः अर्द्धमात्रात्मकः अर्द्धमात्रा वाच्यान्तर्य्यामि ब्रह्मशारीरक इत्यर्थः ब्रह्मानन्द अखण्ड पूर्णब्रह्मैव एक विग्रहो यस्य स ब्रह्मानंदैक विग्रहः इत्यनेन परिच्छिन्नापरिछिन्न ब्रह्मान्तर्यामित्वं व्याख्यातं प्रणवत्वात्प्रणव-वाच्यत्वात् सा प्रकृतिरिति श्रीरामसान्निध्यवशात् जगदानंददायिनीति तात्पर्यवृत्या रसात्मकत्वप्रकृतेः परावाङ्मानस गोचरातीता सीतैवेति श्रीभूर्लीलादिशक्तीनां प्रणववाच्यानामप्यन्तर्य्यामित्वंश्रियः श्रीश्चभवेदग्न्या कीर्त्या कीर्तिः क्षमाक्षमेति श्री रामायणात् सिद्धम् तत्राभिध्यायते अतथाभूतमेव वस्तु लोके कर्मदृष्टमित्यतः परमात्मेवायं च जीवोऽन्तर्यामि ब्रह्माकाशश्चेति त्रयम् तत्र त्रयाणां मध्ये कस्य ध्येयत्वमित्याशंक्य परमात्मन एव ध्येयत्वमित्याह भगवान् सूत्रकारः।।

## दहर उत्तरेभ्यः ।।१४।।

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्ननंतरा काशस्तस्मिन्यदंतस्यतदन्वेष्टव्यं तद्विजिज्ञासितव्यमित्यत्र हृत्पुण्डरीकस्थः परमात्मैव ध्येयत्वेन निर्दिष्टः कुतः यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदये आकाश इत्यारभ्य एतत्सत्यं ब्रह्मपुरमित्याद्युत्तर वाक्योक्त सर्वा धारात्वसर्वान्तर्यामित्वापहतयागत्वादिहेतुभ्यः एतदेव दृढयति।

## गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च ।।१५।।

इतोऽपि दहरः श्रीरामनामाभिन्न ब्रह्मैव कुतः गतिशब्दाम्यां यथा सम्यक्दर्शनविषयभूत ईक्षति कर्मत्वेन व्यपदिष्ट इति गम्यते स एवेह प्रकाशब्रह्मतादात्म्यात्पर पुरुषशब्दाभ्यामभिध्यातव्य इति निश्चेतव्यं नन्वभिध्याने परमपुरुष ईक्षणे तु परात्परःकथं तयोरैक्यमिति। अत्रोच्यते श्रीरामनामाभिन्न प्रकाशब्रह्मणः श्रीरामेण प्रकाशिना तादात्म्यात् ध्यानेक्षण विषयक एवेति अतः प्रकाशब्रह्मणो ध्यानात्परात्परमपुरुषस्य हिरण्यनिधिं निहितमक्षत्रज्ञा उपर्युपरि संचरंतोऽपि न विदुस्तथेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एनं

ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढा। इतिवाक्ये गतिशब्दाभ्यां अहरहर्दिनेदिने इमाः सर्वाः प्रजाः श्रीरामनामाभिन्न प्रकाशरूपं गच्छन्त्यपि एतस्यायं प्रकाश इति न जानंति इति गतिः यतोऽनृतेनाज्ञानेनाच्छादिताः इति अहरहर्गच्छतीति गतिः ब्रह्मलोकं न विदंतीति ब्रह्मलोक शब्दश्च ताभ्यामित्यर्थः तथा हि दृष्टं लिंगं च सता सोम्य तदा संपन्नो भवतीतिश्रुतौ प्राणिनां प्रकाशे ब्रह्मगमनं दृष्टं तदेव ब्रह्मलोकशब्दवाच्य प्रकाशब्रह्मपरत्वेलिंगं चेति अहरहर्दिनेदिने इत्यस्य प्रलय इत्यर्थः ब्रह्मलोकं गच्छंतीत्युक्तं तत्र सुषुत्यादि भेदेन प्रलयस्त्वनेकधा सुषुप्तावपि पुरो तन्नाड्यां मनसो गमनं शरीरनाशे च चन्द्ररश्मिषु बृहदाकाशे च योगिनश्च ब्रह्माकाशं प्रति ज्ञानिनां भक्तानां दहराकाशे च महा प्रलये तु श्रीरामनामाभिन्नं लोकप्रकाश ब्रह्माभिगच्छंति तच्च लोकप्रकाशब्रह्म सर्वत्र व्यापकं तस्मात् पुरीततिनाड्यंतर्गतदहराकाशादयः प्रकाशब्रह्मैव तत्र तत्र तत्स्मरणेन नृसिंहवत् तत्स्वरूप प्रादुर्भाव दर्शनात् तस्माद्दहराकाशः श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्मैव ननु प्रकाश ब्रह्मणो व्यापकत्वाद्दहराकाशस्याभेदश्चेत्तर्हि सर्वगतत्वेन सर्वान्तरस्थं तेन च जीवस्याप्यभेदः कुतो नेत्याशंक्याह भगवान् सूत्रकारः–

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१६॥**

अस्य धृत्याख्यस्य श्रीरामनामाभिन्नब्रह्मणोऽस्मिन् दहराकाशे एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष विधारण एषांलोकानां संभेदायेति अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदायेत्यादि श्रुतिषु प्रकाशब्रह्मणो जीवादिनिरूपणरूपमहिमोपलभ्यते न तु जीवस्य तस्माच्चिदचिद्विग्रहत्वेनैव जीवस्य ब्रह्माभेदात् दहराकाशः श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मैवेति सिद्धंइतोऽपि श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मैव दहराकाशः–

**प्रसिद्धेश्च ॥१७॥**

को ह्येवान्यात्कः प्राण्यात् य एष आकाश आनन्दो न स्यात्सर्वाणि ह वा इमानि भूतान्याकाशादेवोत्पद्यंते इत्यादि श्रुतिषु आकाश शब्दस्य श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्मण्येव प्रसिद्धेः तदेव दृढयति–

**इतरपरामर्शात् स इति चेन्नाऽसंभवात् ॥१८॥**

श्रीरामनामाभिन्नान्तर्यामि ब्रह्मण इतरो जीवोऽथ एष सं प्रसादोऽस्माच्छरीरात्समुत्थायेत्यत्र जीवस्य परामर्शात्स एव दहराकाश इति चेन्न पूर्वोक्तसर्वाधारत्वादिधर्माणामस्मिन् जीवेऽसंभवात् तस्मात् हृदया काशान्तर्वर्त्याकाशमन आद्यन्तः करण चतुष्टयं तदेव दहरं पुण्डरीकं वेश्म तत्र विष्टोदरः श्रीरामनामाभिन्नं ब्रह्मैव जीवादिनियमेन श्रीरामनामाभिन्न प्रकाशब्रह्मैव दहररूपत्वात् स एव दहरः किं न स्यादित्याशंक्याह भगवान् सूत्रकारः।

**उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१९॥**

य आत्मापहतपाम्मा विज्वरो विशोको विमृत्युर्विजिद्यत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्युत्तरान्मुक्त जीव परात्प्रजापतिस्स्याज्जीव एव दहरइति चेन्न तुर्य्यातीतावस्थां गते पुरुषोत्तम प्रसादाद्देव प्राप्तानन्दविग्रहेऽपहतपाप्मत्वादि गुणानामाविर्भावात् न तु स्वतः प्रकाशे तादात्म्यात्प्रकाश ब्रह्मणि तेषां गुणानां स्वतः सदैव विद्यमानत्वमतो न जीवो दहराकाशः यदि भेद एव ब्रह्मणः सकाशाज्जीवस्य तर्हि किमर्थमत्र वाक्ये जीवपरामर्श इति चेदत आह भगवान् सूत्रकारः–

**अन्यार्थश्च परामर्शः॥२०॥**

तुर्यावस्थांगस्य तदुपरि कैवल्ये स्थितस्य श्रीरामप्रसादलब्धविग्रहस्यैवा पहतपाप्मत्वादि गुणानां प्राप्तिरित्येतदर्थमत्र प्रजापति वाक्ये जीवस्य परामर्शः ननु हृदयाकाशेऽल्पजीवस्य स्थितिस्तत्रापि प्रकाशब्रह्मणश्चातोऽल्पत्वं तत्रापि प्रकाशिनोऽन्तर्य्यामित्वेनाल्पतमत्वमाधारापेक्षया आधेयस्याल्पत्वादतस्तयोर्जीवत्वं कुतो नेत्याशंक्याह भगवान् सूत्रकारः–

**अल्पश्रुतेरिति चेत्तदुक्तम् ॥२१॥**

दहरवाक्येऽल्पश्रुतेः जीवत्वमिति चेदत्र यदुत्तरं तदणोरणीयान्महतो महीयानित्यत्र यथा सकलभुवनाधिपतिरपि अयोध्याधिपतिरित्यादिनोक्तमेव

तथा जीवे अणुत्वं महत्वञ्च न संभवति ईश्वरं तूभयमविरुद्धं ननु जीव ब्रह्मणोर्माभूदभेद:निरंजन: परमं साम्यमुपैति इति श्रुत्या उक्तापहतपाप्मत्वादि-धर्मवत्वेन च जीवस्य साम्यं कुतो नेत्याह भगवान् सूत्रकार:–

**अनुकृतेस्तस्य च ॥२२॥**

न तत्समश्चाभ्यधिकश्च दृश्यते इति श्रुत्या समो न विद्यते तस्य विशिष्ट: कुत एव हीति वाल्मीकीयवाक्येन च तस्य प्रकाशब्रह्मणोऽनुकरणात् बोधनादित्यर्थ: ननु मास्तु प्रकाशिनो जीवस्य साम्यं चित्त्वेन प्रकाशब्रह्मणा साम्यमस्तु इति चेन्न जीवस्य प्रकाशब्रह्मचिद्विग्रहत्वात् ननु निरंजन: परमं साम्यमुपैतीतिश्रुते: का गतिरिति चेदुच्यते एतन्मूर्तशरीरमतिसृज्य ब्रह्मणैवपश्यति ब्रह्मणैव जिघ्रतीत्यादि श्रुत्या भगवद्दत्तानन्दरूपषष्ठ शरीर परेयं श्रुति:–

**अपि च स्मर्यते ॥२३॥**

**दासभूता:स्वत: सर्वे ह्यात्मन: परमात्मन:। नान्यथालक्षणं तेषां बन्धमोक्षतयैव चे**ति पद्मपुराणेन–

**नमो नमस्तेस्त्वृषभाय सात्वतां**
**विदूर काष्ठाय मुहु: कुयोगिनाम्।**
**निरस्त साम्यातिशयेन राधसा**
**स्वधामनि ब्रह्मणि रंस्यते नम:॥**

इति भागवते च साम्यनिरास: स्मर्यते तस्मात्केवलं भगवदात्मक भगवद्दत्त षष्ठशरीर भोगमात्रेण वै साम्यं अङ्गुष्ठमात्र पुरुषो मध्य आत्मनि तिष्ठतीत्यत्र श्रुतावङ्गुष्ठमात्रत्वं जीव एव भवितुमर्हति अङ्गुठमात्रलिंग-शरीरापेक्षया कुत: अथ सत्यवत: कायात्पाशबद्धं वशंगतं अगुष्ठमात्रपुरुषं निश्चकर्ष यमो वलादिति श्रुते: अत: श्रीरामनामाभिन्नं ब्रह्म सर्वत्र परिपूर्णं नात्र श्रुतौ अंगुष्ठ परिमितं भवितुमर्हति इत्याशंक्य नेत्याह भगवान् सूत्रकार:–

**शब्दादेव प्रमित: ॥२४॥**

अगुष्ठमात्रः पुरुषो मध्य आत्मानस्तिष्ठतीत्यत्रैव ईशानो भूतभवस्य न ततो विजुगुप्सत इति शब्दाद्भूत भवस्येशानत्व प्रतिपादकात्परमात्मैवात्र ह्यंगुष्ठमात्रत्वेन प्रमितः नांगुष्ठमात्र परमितेः जीवो इति ननु स्मृतेः का गतिरिति चेदुच्यते स्मृतिस्तु सप्तदशतत्वात्मकं लिंगशरीरपरानजीवपरान् च परात्मपरा ननु विभोः श्रीरामनामाभिन्न ब्रह्मणः कथनांगुष्ठमात्रमित्याशंक्याह–

**हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥२५॥**

अंगुष्ठमात्रे हृदि ब्रह्मणोऽपि हृदयापेक्षयांगुष्ठमात्रत्वं कुतः मनुष्याधिकारत्वात् मनुष्यहृदयस्य मनुष्यांगुष्ठमात्रस्य परिमितत्वादीश्वरस्यापि मनुष्यांगुष्ठमात्रपरिमितत्वादुपासनाया मनुष्यस्यैवाधिकारात् ननूपासनायां मनुष्यस्यैवाधिकारो न संभवति तद्यो यो देवानां प्रत्यवबुध्यत स एव तदभवदित्यादि श्रुतिषु देवादीनामप्यधिकार श्रवणात् स्मृतिपुराणेषु च गजकपिपक्षिसर्प्पादीनामप्युपासकत्वस्मरणाच्चेत्यत आह भगवान् सूत्रकारः–

**तदुपर्य्यपि बादरायणः संभवात् ॥२६॥**

ब्रह्मोपासने मनुष्यस्यैव मुख्योऽधिकारः तेभ्यो मनुष्येभ्यः उपरि अग्रे वर्त्तमानानां देवादीनां अपि शब्दात् अधोवर्तमानानां गजपक्ष्यादीनामपि मनुष्याऽधिकारः संभवात् येन कर्मणा देवादि शरीरप्राप्तिः तत् कर्मोपासनकारणी भूतं मनुष्यशरीरे कृतं कर्म तद्धेतोः देवादिशरीरेऽपि उपासनसंभवात् तस्माद्ब्रह्मोपासनायां मनुष्यस्यैव मुख्यतयाधिकार इति बादरायणो मन्यते अन्यथा पूर्व सूत्रे मनुष्याधिकारत्वादित्यस्य वैयर्थ्यं स्यात् ननु गजपक्ष्यादीनां भवतूपासकत्वं परन्तु देवस्य उपासकत्वे स शरीरत्वेन बहुज्ञेषु युगपदाहूतस्य सर्वयज्ञेषु युगपद्गमनानुपपत्तिरित्यशंक्याह।

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥२७॥**

यज्ञ कर्मणि विरोध इति चेन्न कुतः सौभर्य्यादिवत् देवादीनामनेक विग्रहप्राप्तेर्दर्शनात् यदि मनुष्यकृतकर्मणैव देवादिशरीरप्राप्तिस्तर्हि देवानामनित्यत्वेनेन्द्रादि प्रतिपादकानामनादि वेद शब्दानामनित्यत्वं स्यात्तत्राह भगवान्सूत्रकारः।

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥२८॥**

वेदशब्दे उक्तलक्षणो विरोधि इति चेन्न कुत: अत: वेदशब्देभ्य: इन्द्रादि प्रतिपादकेभ्य: प्रभवात् तत्तद्विग्रहाणामिन्द्रादिरूपाणामुत्पत्ति दर्शनात् तथा प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थ: श्रुतिस्तावत् वेदेन नामरूपे व्याकरोदिति वेदशब्देभ्य एवादौ निर्ममे स महेश्वर इति मनुस्मृति: तदेव द्रढयति–

**अत एव च नित्यत्वम् ॥२९॥**

यत: वेदे सर्वस्य वर्तमानत्वं तत एव सर्वस्योद्‌भवो त एव वेदशब्दस्य नित्यत्वं जगतश्च नित्यत्वं धाता यथा पूर्वमकल्पयदिति श्रुते: ननु ब्रह्मणा एव जगदुत्पत्तिलयादि श्रवणात्कथमुच्यते वेदशब्देभ्य एव सर्वोत्पत्तिरिति चेच्छृणु वेदस्य श्रीरामनामार्थत्वाद्ब्रह्मत्वं परब्रह्मनादात्म्याच्चेति न दोष: ननु सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमित्यादि श्रुते: सृष्टे: पूर्वमिंद्रादिरूपाणामविद्यमानत्वात् तद्वाचक वेद शब्दानामप्यनित्यत्वं स्यादिति चेत्तत्राह भगवान् सूत्रकार:–

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥३०॥**

अपराजितायां पुर्यां विद्यमानानां सच्चिदानन्दरूपाणामिन्द्रादीनां देवानां समाननामरूपत्वात् स्वर्गस्थानां देवानामावृत्तौ प्रलयेऽपि वेदशब्दस्य नानित्यत्वं सूर्य्याचंद्रमसौ धाता यथा पूर्वमकल्पयदिति श्रुतौ तथा दर्शनात्।

**आसीनन्तमयोध्यायां सहस्रस्तम्भमण्डिते।**
**मण्डपे रत्नसंज्ञे च जानक्या सह राघवम्।**
**चंद्रादित्य सहस्राणि रुद्रकोटिशतानि च।**
**अवतारसहस्राणि शक्ति कोटिशतानि च।**
**महाभैरव कालादि कोट्यर्बुदशतानि च।**
**गंधर्वाणां सहस्राणि देव कोटिशतानि च।**
**सभां यस्य निषेवंते स श्रीराम इतीरिते॥**

इतिशिव संहितास्मृतेश्च सूत्रद्वयेन जैमिनिमतमुपन्यस्यन्नाह भगवान् सूत्रकारः

**मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥३१॥**

**ज्योतिषि भावाच्च ॥३२॥**

असौ वा आदित्यो देव मध्विति मधुविद्यायां मधुत्वेनादित्योपासने मनुष्यस्यैवाधिकारसंभवात् योऽसावदित्यो देवः स च कमन्यमादित्यमुपासीदिति हेतोर्देवानामुपासनाद्देवोपासने देवानामधिकारं जैमिनिर्मन्यते तदेवाज्योतिषां ज्योतिरायुर्होपासते मृतमित्यत्र ब्रह्मोपासने देवानामुपासकत्ववचनमन्यविद्या व्यावृत्यर्थं समाधानं कुर्वन्नाह।

**भावं तु बादरायणोऽस्ति हि ॥३२॥**

तु शब्दः पूर्वपक्षं व्यावर्तयति देवानामपि मध्वादिष्वधिकारभावं बादरायणोऽहं मन्यते हि यतः आदित्यवस्वरूप्[1] सनेनाधिकार इति चेदुच्यते ज्योतिः शास्त्रे आदित्यादि मंडलस्य तेजः पुंजत्वेनोपपादनेऽपि तदभिमानि चेतनस्योपासने संभवोऽस्ति न तु आजहार इमाः शूद्र इति श्रुत्वा जानश्रुतेः शूद्रस्यापि मनुष्यत्वाविशेषात् अन्तर्यामिण उपास्यस्य तत्र संभवात् शूद्रस्यापि ब्रह्मविद्यायामधिकारो भवितुमर्हतीत्याशंक्य नेत्याह भगवान् सूत्रकारः–

**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥३४॥**

जानश्रुतेः शूद्रेति संबोधनं न जाति विषयकं हि तु शुचा द्रवतीति शूद्र इति योगाभिप्रायकं अस्य जानश्रुतेस्तदनादर श्रवणात्तेषां हंसानामनादरवचन-श्रवणात् शुक्शोक उत्पन्नः तदा द्रवणात् तया शुचा द्रवणाद् ब्रह्मज्ञं रैक्यं प्रत्यागमनात् सूच्यते इति शूद्रशब्देन जानश्रुतिः प्रतिपाद्यत इत्यर्थः तस्मान्नास्ति विद्यायामधिकार इति तदेव द्रढयति।।

---

१. यहां भी पृष्ठ २१५ (पाण्डुलिपि के) प्राप्त नहीं है।

**क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिंगात् ॥३५॥**

जानश्रुतेः तत्र संवर्गविद्यायां क्षत्रियत्वावगतेः उत्तरत्र चैत्ररथेनाभि प्रतारणा क्षत्रियेण समभिव्याहाररूपाल्लिंगाद्गम्यते क्षत्रियत्वमस्येति इदानींन्यायसिद्धशूद्रस्यानधिकारः श्रुतिस्मृतिभिरनुगृह्यते इत्याह भगवान् सूत्रकारः–

**संस्कारपरामर्शात्तदभावाभिलापाच्च ॥३६॥**

कर्मणैव ब्राह्मणत्वं क्षत्रियत्वं च आत्मा वै जायते पुत्र इति श्रुतेः पितृगत संस्कारस्य पुत्रेऽपि परामर्शादनुवृत्तेः तदभावाभिलापाच्चेति न शूद्रे पातकं किंचिन्न च संस्कारमर्हतीति स्मृत्या तस्यपितृगतसंस्कारस्य शूद्रेऽभावाभिलापात्कथनादिति सूत्रार्थः अतो न ब्राह्मणकुमारस्य शूद्रत्वं पितृगतसंस्कारस्य परामर्शात् जन्मना जायते शूद्रः इति उपनयनादि संस्काराभावमात्रे शूद्र तुल्यत्वमुपपादयति न शूद्रत्वमिति बोध्यं एतदेव दृढयति।

**तदभावनिर्द्धारणे च प्रवृत्तेः ॥३७॥**

नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याह रोपत्वानेष्ये इति तस्येव उपदेश अवनिर्धारणे एव शूद्रप्रवृत्तेः न शूदस्योपनयनादिसंस्कारः॥

**श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥३८॥**

अथ हास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदोऽर्थावधारणे शरीरभेद इति वेदाक्षरविचारेण शूद्रःपतति तत्क्षणात् इति च स्मरणाच्छूद्रसमीपे नाध्येतव्यमिति शूद्रस्य वेदश्रवणादि प्रतिषेधान्न शूद्रस्य वेदोक्त कर्माधिकारः ननु विदुरादीनां ब्रह्मविद्योपदेशः कथं संगच्छते इति चेदुच्यते श्रावयेच्चतुरोवर्णान् कृत्वा ब्राह्मणमग्रतः इति वेदार्थोपवृंहणरूपेतिहास पुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणात् जन्मान्तरसंस्कार वशाद्वा विदुरादीनां ब्रह्मज्ञानं स्त्रीशूद्रद्विजवंधूनां त्रयी न श्रुतिगोचरेति वाक्यात् गार्गीमैत्रेयी प्रभृतीनां स्त्रीणामप्यनधिकारात्कथं तासां ब्रह्मविद्याश्रवणमिति

चेदुच्यते उत्तमस्त्रीणां न शूद्रवत् सपत्नी मे पराधर्म इत्यादिष्वधिकारदर्शनात् संस्काराभावेनाभावस्तु सामान्येन अस्ति च तासां संस्कारः स्त्रीणां प्रदानकर्मैव यथोपनयनं तथेति स्मृतेः। ननु भगवदवतारस्य वेदव्यासस्य कानीनत्वात् मर्यादापालकत्वाच्च वेदार्थविचारानाधिकारात्कथं वेदविभाग उपनिषच्छास्त्र प्रतिपादनं तेन कृतमिति चेच्छृणु वसंते ब्राह्मणो नादधीत ग्रीष्मे राजन्यः शरदि वैश्यः वर्षासु रथकारः इत्यत्र यथापितृगतसंस्कारात् रथकारस्यापि अग्न्याधान विधानं तथात्रापि पितृगत संस्कारात् न कश्चिद्दोष इति ननु अथ हास्य वेदमुपश्रृण्वतः स्त्रीषुजानुभ्यां श्रोत्रपूरण्मुदाहरणेजिह्वाछेदोऽवधारणे हृदयविदारणमिति श्रुत्या श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रत इति स्मृत्या च पूर्वशूद्रस्य वेदाध्ययनेऽनधिकारो ब्राह्मणस्य चाधिकारमित्युक्तं तत्र जीवात्मनोऽन्तर्यामिणश्च जात्यभावात् कर्मणोऽपि शरीर एव इमामपि शंकां परिहरन् अधिकरणान्तरं प्रस्तौति सत्वादाब्राह्मणत्वादि कोऽपि भेदो नास्ति कथं वेदाधिकारानधिकारविचारः तत्राह भगवान् सूत्रकारः

**प्राणः कंपनात् ॥३९॥**

यदि किंचिज्जगत्सर्वं प्राण एव जातिनिःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीतिश्रुतौ वज्रशब्देन ब्रह्मैव कुतः कम्पनात् कम्पनं तु भयाद्भवति तत्कुतः भीषास्माद्वातः पवते भीषोदयति सूर्यःभीषाभीषास्मादग्निश्चेन्द्रश्चमृत्युरुद्विजति पंचम इति श्रुतेः तस्माद्वेदोक्तस्वस्वाधिकारोचित धर्माचरणेन भयहेतुना भूतं वज्र शब्दितं ब्रह्मणे विदुःस्मृतास्तेभवन्ति। अतो शरीर विशिष्ट जीवानामेवभयतुल्याचरण सत्वात् अधिकारानधिकार विचारः सम्यगेवेति बोध्यं ब्रह्मणो भयहेतुत्वं प्रतिपादितं कथंचिदुपकारे कृणुते नैकेन तुष्यति न स्मरत्यपकाराणां शतमप्यात्मवत्तयेति। **सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममे**तिवाल्मीकीय वाक्यात्तस्याति सौशील्याभिधानेन कथं भयहेतुत्वं तस्येत्याशंक्याह भगवान्सूत्रकारः।

## ज्योतिर्दर्शनात् ॥४०॥

महद्भयं वज्रमुद्यतमित्यत्र वाक्ये ज्योतिषः प्रकाशब्रह्मणः भय हेतुत्वदर्शनात् न प्रकाशिब्रह्मणः मम हेतुत्वं कुतस्तस्य प्रकाशिनो दयालुत्वादिन्द्रियाणां प्रकाशकमनः (पूर्वोक्त वाक्यानि कथंचिदित्यादीनि प्रकाशिपराणि) मनसः प्रकाशको जीवस्तस्य प्रकाशकं श्रीरामनामा-भिन्नप्रकाशान्तर्य्यामि ब्रह्म तस्यापि प्रकाशकं देवानां पूरयोध्या तस्यां हिरण्मयः कोश स्वर्गोलोकोज्योतिषावृतेति श्रुति तात्पर्यगम्यवाङ्मनोगोचरातत्वेन श्रीरामस्य साकेताधीशस्य हेतुत्वाभावात् प्रतिपादितायोध्याधीशं श्रीरामाख्यं एतदेव मुण्डकेऽपि **हिरण्मये परे कोशे विरजं ब्रह्म निष्कलं। तच्छुभ्रंज्योतिषां ज्योतिस्तद्यदात्मविदो विदुरि**ति अतः परमदयालोर्वाङ्मनोगोचरातीतस्य श्री रामस्य न भयहेतुत्वमिति सर्वमनवद्यम् नन्वाकाशो ह वै नामरूपयोनिर्विहितेति भूताकाश एव सर्वाश्रयत्वेन सर्वेषां ज्योतिषामप्याधारः यथा च प्रकाशब्रह्मणोज्योतिष्वविशेषणस्तस्याप्याश्रयो भूताकाशस्तस्मात्सर्वाश्रयो भूताकाश एव किं न स्यादित्याशंक्याह भगवान् सूत्रकारः।

## आकाशोऽर्थान्तरत्वादिव्यपदेशात्॥४१॥

श्री रामनामाभिन्नं प्रकाश रूपं परमेव ब्रह्मेहाकार शब्द प्रतिपाद्यं भवितुमर्हति कस्मादर्थान्तरत्वात् दिव्यव्यपदेशात् ते यदन्तरात्ब्रह्मेतिनाम-रूपाभ्यामर्थान्तर कर्तुमाकाशंव्यपदिशति। तस्मात् श्री रामनामाभिन्नब्रह्मैवाकाश शब्दवाच्यमिति पूर्वं नामरूप निर्वाहक आकाशः परमात्मेत्युक्तं तत्र प्रत्यगात्मव्यतिरिक्तः परमात्मानमस्त्येव जीवपरयोरैक्योपदेशात् द्वैतप्रतिषेधत्वमतो नामरूप निर्वाहकाकाशो जीवनाय किं न स्यादित्यतआह।

## सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशादिस्तु वर्त्तते ॥४२॥

परमात्मा जीवद्भिन्न एव प्राज्ञेनासंपरिष्क्त इति सुप्ति वाक्ये प्राज्ञेनात्मनान्वारूढ़ उत्सर्जनं यातीत्युक्तांतिक वाक्ये च प्रकृत जीवाद्यभेदेन प्राज्ञ शब्द वाक्यस्य परमात्मनोनिर्देशादित्यर्थः तस्मात् आसमन्तात् काशते इति व्युत्पत्तेः नाकाशो जीवः इति किन्तु श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्मैव

**यमिच्छसि महाराज तां तनुं प्रविश स्वकां। वैष्णवीं तां महातेजोयद्वाकाशं सनातनत**मिति श्रीमद्रामायणात् तदेव द्रढ़यति।

**पत्यादि शब्देभ्यः ।।४३।।**

एष सर्वेश्वर एषभूताधिपतिरित्यादि पत्यादि शब्देभ्य आकाश शब्देन जीवो नाप्याभूताकाशः किंतु ब्रह्मैवेति सिद्धम् इति श्रीमद्‌भगवदवतार-वेदार्थ निर्णायक श्रीमद्वेदवेदान्ताचार्य्य श्रीमद्वेदव्यासकृत सूत्राणां सिद्धि श्री महाराजाधिराज श्री महाराजा बहादुर श्री सीता रामचन्द्र कृपा पात्राधिकारि विश्वनाथ सिंह जूदेव कृते श्री राधावल्लभीयमत प्रकाशकं भाष्ये प्रथमाध्यायस्यतृतीयः पादः ३।।

# अथ राधावल्लभीयमतप्रकाशकं

# ब्रह्मसूत्र-भाष्यम्

## चतुर्थः पादः

अस्मिन् चरणे निरीश्वरसांख्यवादिमतं निराक्रियते। तैर्महतः परमव्यक्तमव्यक्तात्पुरुषः पर इति श्रुतौ अव्यक्त पदे प्रधानं पुरुषपदेन च जीव उच्यते इति तत्राह भगवान् सूत्रकारः।

**आनुमानिकमप्येकेषामिति चेन्न**
**शरीररूपकविन्यस्तगृहीतेर्दर्शयति च॥१॥**

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥**

**महतः परमव्यक्तमव्यक्तात्पुरुषः परः।**
**पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरिति॥**

श्रुतौ अव्यक्त शब्देन प्रधानं पुरुष शब्देन जीव इति चेन्न कुतः शरीर रूपक विन्यस्त ग्रहीते।

**आत्मानं रथिनं विद्धि शरीरं रथमेव च।**
**बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च॥**

**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमितिश्रुतौ॥**

ब्रह्मावाप्त्यनन्तरं षष्ठशरीरस्य रथरूपकविन्यस्तस्य अव्यक्तपदेन ग्रहणादित्यर्थ: तस्मादव्यक्तशब्देन भगवत्प्रसादलब्धेन प्रकाशब्रह्माभिन्नषष्ठ शरीरमुच्यते पुरुषशब्देन च परमपुरुष: प्रकाशिश्रीराम एवेति यच्छब्देन वाङ्मनसी प्राज्ञस्तद्यच्छेच्छांत्व आत्मनीति श्रुतिश्च दर्शयति भगवद्दत्तषष्ठ शरीरकस्तद्रूपवाङ् मनसीवाङ्मनोगोचरातीते परमपुरुषे यच्छेन्नियोजयेदित्यर्थ:। ननु भगवत्प्रसादलब्ध श्री रामनामामिन्नान्तर्यामि प्रकाश ब्रह्माभिन्नषष्ठ शरीरस्य भगवत्सेवनयोग्यस्य व्यक्तत्वात् कथमुक्तश्रुतावव्यक्तशब्दवाच्यतेत्यत आह भगवान् सूत्रकार:

## सूक्ष्मं शरीरं तु तदर्हत्वात्॥२॥

तु शब्द: पंचशरीरवैलक्षण्ये अव्यक्त शब्दवाच्यं भगवद्दत्त प्रकाशब्रह्माभिन्नं षष्ठशरीरं सूक्ष्मं कुत: तदर्हत्वात् सच्चिदानन्दरूपत्वे वायव्या कृतार्हत्वात् प्राकृत सप्तदशतत्वात्मक लिंगशरीरस्याव्यक्तशब्दवाच्यत्वे तद्धेदं तर्ह्यव्याकृतमासीदितिश्रुतिर्व्याकुप्येत् यदि षष्ठशरीरस्याव्याकृत ब्रह्माभिन्नत्वं न मन्येत तर्हि ब्रह्मणैव पश्यति ब्रह्मणैव शृणोत्यादिश्रुति विरोधश्च स्यात् ननु भगवद्दत्तश्री रामनामाभिन्नान्तर्य्यामिप्रकाश ब्रह्माभिन्न षष्ठशरीरस्य सच्चिदानन्द रूपत्वेन परमपुरुषादैक्यादव्यक्तात्पुरुष: पर इति श्रुति: कथं संगच्छेतेत्यत आह भगवान् सूत्रकार:।

## तदधीनत्वादर्थवत्॥३॥

प्रकाश ब्रह्माभिन्न षष्ठशरीरस्य जीवस्य च प्रकाशि परमपुरुषाधीनत्वादुक्तश्रुतेरर्थवत्वमित्यर्थ: तदेव द्रढ़यति भगवान् सूत्रकार:।

## ज्ञेयत्वावचनाच्च॥४॥

जीवस्य तु उपास्यत्वेन च ज्ञेयत्वावचनादित्यर्थ:

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥५॥

ननु षष्ठ शरीरस्याज्ञेयत्ववचनमसिद्ध्यत: अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगंधवच्च यत् अनाद्यनंतं महत: परं ध्रुवं निश्चयात्तं

मृत्युमुखात् प्रमुच्यते इत्यत्र न चाप्येति श्रुतिः षष्ठशरीरस्य ज्ञेयत्वं वदतीति चेन्न कुतः हि यस्मात् तात्पर्यवृत्या पुरुषान्न परं किंचित्सा काष्ठा सा परागतिरिति एष सर्वेषु भूतेषु गूढ़ात्मा न प्रकाशते इत्यादि श्रुत्या प्राज्ञस्यैव परमात्मनः प्रकरणात् अन्तः प्रकाशि परमपुरुषः श्री राम एव तात्पर्यवृत्या ज्ञेयः।

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च॥६॥**

महतः परमव्यक्तमव्यक्तात्पुरुषः पर इति श्रुतौ अव्यक्तपदेन भगवत्प्रसादलब्धं षष्ठशरीरं गृह्यते न प्रधानादि यतः कठवल्यां परमात्मप्रकरणस्येयं श्रुतिः अस्मिन्नेव प्रकरणे त्रयाणां पितृप्रसन्नत्व स्वर्गहेत्वग्निचयनपरमात्मविद्यानामुपन्यासः प्रश्नश्चेति प्रधानादीनां तु प्रश्नोपन्यासौ नस्तः तदेव द्रढ़यति।

**महद्वच्च ॥७॥**

महच्छब्दः सांख्यैः प्रधानप्रकृतेराद्यपरिणामे प्रयुक्तः बुद्धेरात्मा महान्परः महान्तम् विभुमात्मानमितिवैदिक प्रयोगे तद्वाचको यथा न गृह्यते आत्म शब्द समानाधिकरण्यात् तथा महतः परमव्यक्तमव्यक्तात्पुरुषः पर इति वैदिक प्रयोगे ननु कठवल्यां मास्त्वव्यक्त शब्देन प्रधानं अजामेकां **लोहितशुक्ल कृष्णां वह्वी प्रजाः सृजमानां समानाः। अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥** इतिश्वेताश्वतरोपनिषच्छ्रुत्या गौरवाद्यंतवतीति श्रुत्या च म जाया उत्पत्ति विनाशाभावेन सर्वजगत्कारणत्व प्रतिपादनात्सत्वरजस्तमसां साम्यावस्थापन्नं प्रधानमजाशब्देन कुतो नेत्यत आह भगवान् सूत्रकारः।

**चमसवदविशेषात् ॥८॥**

सत्वरजस् तमसां साम्यावस्थापन्नं प्रधानं तत्र न गृह्यते कुतः अविशेषात् चमसवत् यथाह्यवर्गाविलश्च स लुब्धवुध इत्यत्र चमस शब्दस्य त इदं तच्छिर एष ह्यर्वाक् बिल श्चमसइति वाक्यशेषे विशेषश्रवणा

दर्थनिश्चयस्तथाऽत्र विशेषश्रवणं प्रधानविषये नास्तीत्यर्थः जहात्येनां भुक्तभोगामजोन्य इतिश्रुति शेषे तस्यामुक्तजीवैस्त्यागश्रवणेनातद्ग्रहणे विशेषाभावात् तथा तत्राऽपि अव्यक्त शब्देन भगवद्दत्तसखीरूपषष्ठशरीरस्यैव ग्रहणं न प्रधानादीनामिति षष्ठ शरीरसखी रूपमेव जीवभूतां महाबाहो यदेदंधार्यते जगदिति भगवद्वाक्यात् वासुदेवः पुमानेकः स्त्रीप्रायमितरञ्जगदिति विष्णु पुराणोक्तेश्च एतदेव द्रढयति भगवान् सूत्रकारः।

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥९॥**

तु शब्दोऽवधारणार्थः परंज्योतिरूप संपद्य स्वेन रूपेणाभिनिष्पद्यते इत्यत्र ज्योतिषशब्देन भगवद्दत्त षष्ठ शरीरमेव गृह्यते तस्यैवोपक्रमात् हि यतः एके शाखिनः तथा अधीयते **नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेषैव वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते तनुं स्वामि**तिस्वदत्त स्वशरीरेणैव लभ्य इत्यर्थः तस्मादव्यक्तशब्द वाच्यं प्रधानं नेति सिद्धम् ननु पूर्वम् भगवद्दतशरीरस्य सखीरूपत्वमुक्तं परंज्योतिरूपं संपद्य स्वेन रूपेणाभि निष्पद्यत इति श्रुतौज्योतिः स्वरूपत्वमुक्तं अत्र न उभयोः परस्परं विरोधः तं परिहरन्नाह भगवान्सूत्रकारः।

**कल्पनोपदेशाच्च मध्वादिवदविरोधः॥१०॥**

ज्योतिषशब्देन प्रकाशात्मक सखी रूपं गृह्यते कुतः कल्पनोपदेशात् सामर्थ्योपदेशादित्यर्थः कृपूसामर्थे इति धातु स्मरणात्भारूपः सत्यकामः सत्यसंकल्प इत्यादि श्रुतेः ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः यथेष्टं परिवर्तते तस्यैवानुग्रहेरिता इति स्मृतेश्च तत्र दृष्टान्तः मध्वादिवत् यथोपासकाः करचरणादि विशिष्टादित्यस्य मधुत्वेनोपासनं कुर्वते तत्र आदित्यस्य तत्करचरणादिकं तु ज्योतिः स्वरूपमेव तद्वदत्रापि भगवद्दत्त प्रकाशब्रह्ममयशरीरस्य ज्योतिर्मयसखीरूपत्वं सिद्धम् नत्वव्यक्तशब्देन भगवद्दत्तशरीरमुक्तं तत्कथं संगच्छते भगवत्सेवौपयिक करचरणादि विशिष्टत्वेन पंच विंशतितत्वात्मकत्वात् कथमव्यक्तत्वमित्याशंक्याह भगवान्सूत्रकारः।

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥**

यस्मिन् पंच पंचजनाआकाशश्च प्रतिष्ठितः तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमिति वृहदारण्यकश्रुत्या न भगवद्दत्त शरीरे कपिलोक्त तत्वानि गृह्यन्ते कुतः नानाभावात् लौकिक शरीरे चतुर्विंशति तत्वात्मकत्वेन नानाभावान्नानात्वादतस्तस्यानित्यत्वमेव भगवद्दत्त शरीरस्य चतुर्विंशति तत्वात्मकशरीरात् अतिरेकात् भिन्नात्वाच्चेति न सांख्योक्त पंचविंशति तत्वात्मक शरीरवद्भगवद्दत्त शरीरं किंतु ज्योतिस्वरूपं प्रधानात्परमिति ननूक्तं यस्मिन् पंच पंचजनाः प्रतिष्ठिताः तत्किमित्याशंक्याह भगवान् सूत्रकारः।

**प्राणादयो वाक्यशेषात् ॥१२॥**

पंच जनाः प्राणादयः ते च जीवस्य भगवद्दत्तनित्य षष्ठ स्वरूपे प्रतिष्ठिता इत्यर्थः कुतः वाक्यशेषात् प्राणस्य प्राणमुत चक्षुषश्चक्षुरूप श्रोत्रस्य श्रोत्रमन्नस्यान्न मनसो ये मनो विदुरितिभगवद्दत्त शरीरस्य ब्रह्मात्मकत्वात्प्राणादीनां प्राणादित्वमित्यर्थःभाकाशश्च प्रतिष्ठित इत्यस्यासमन्तात् काशते प्रकाशते इत्याकाश इति व्युत्पत्या तच्छरीरस्य ज्योतिः स्वरूपत्वेन प्रकाशवत्त्वादुपपत्तिः अतः अस्मिन्नेव शरीरे कारणत्वेन भगवद्दत्त शरीरं सदा तिष्ठत्येव भगवत्प्रसादाच्चात्मनो नित्यशरीरं लब्ध्वा इहैवामृतत्वं प्राप्नोतीति श्रुतितात्पर्यार्थः अत्र ब्रह्म समश्नुत इति श्रुतिप्रामाण्यात् ननु प्राणादीनां पंचजनशब्दार्थत्वमुक्तं तच्च माध्यंदिनपाठे संभवति काण्व पाठे तु अन्नवर्जितानामचतुर्णामेव पाठात्तन्मते पंचपंचजनाः के ग्राह्या इत्याकांक्षायां पंच ज्ञानेन्द्रियाणि इत्याह।

**ज्योतिषैकेषामसत्यन्ने॥१३॥**

एकेषां काण्वानां वाक्यशेषश्रुतौ असत्यन्न शब्दे तत्र तं देवा ज्योतिषां ज्योतिरिति श्रुतिवाक्योपक्रमगते न ज्योतिशब्देन पंचजनसंज्ञानीन्द्रियाणि इति विज्ञायते कथमिति चेदुच्यते ज्योतिषांज्योतिरिति प्रकाशकानामपि प्रकाशकं ब्रह्मेति प्रतीयते के ते ब्रह्माधीनाः प्रकाशकाः इत्यपेक्षायां पंचसंख्यकानि प्रकाशकानि पंचेन्द्रियाणीति प्रसिद्धत्वादवगम्यतेअतो यस्मिन् पंच पंचजना

आकाशश्च प्रतिष्ठित इत्यनेन ब्रह्मणि प्रतिष्ठितानि पंचज्ञानेन्द्रियाणि गृह्यन्ते ननु भगवद्दत्त शरीरस्य ब्रह्मात्मकत्वेन प्राणादिकारणत्वं प्रतिपादितं तन्न संङ्गतं कुतः आकाशात्मसदसत्प्राणप्रधानादीनां श्रुतिषु कारणत्वप्रतिपादनेन ब्रह्मण एव कारणत्वमिति तव सिद्धान्त सङ्गात् कथं चिदचिद्विग्रहात्मकस्य ब्रह्मणः एव कारणत्व इत्याशंक्याह भगवान्सूत्रकारः।

**कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः॥१४॥**

कारणत्वेन यथा ब्रह्म व्यपदिष्टं तथा भूतस्यैव ब्रह्मणः जन्माद्यस्य यत इति सूत्रे कारणत्वोक्तेरित्यर्थः तस्माद्भगवद्दत्त शरीरस्य जगत्कारणत्वं सिद्धम् नन्वाकाशादिषु जगत्कारणत्व प्रतिपादिकानां श्रुतीनां का गतिरित्यत आह भगवान् सूत्रकारः।

**समाकर्षात्॥१५॥**

आकाशादीनां महाप्रलये ब्रह्मणि समाकर्षात्समावेशात्ततो जगदुत्पत्युपक्रमे शोकायतेतिश्रुत्या यस्मिन् कल्पे येनैव जगदुत्पादयितुं ब्रह्मण इच्छा तदा तदेव प्रथममुत्पादयति तस्यैव जगत्कारणत्वं प्रतिपादयन्ति श्रुतयः परमकारणम् ब्रह्मण एवेति अथवा सर्वाणि नामानि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति इति–श्रुत्या आकाशादि पदानां ब्रह्मणि समाकर्षात् समावेशात् अतः परम पुरुषस्य परम कारणत्वं सिद्धमिति पूर्वम् परमपुरुषस्य जगत्कारणत्वमुक्तं तत्कथं संगच्छते जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचंचलाः इति स्वप्नान्त सौम्य विजानीहि यत्रैतत्पुरुषः स्वपिति सता सोम्य तदा संपन्नो भवतीति पुरुषः प्रकृतिस्थो हि मुक्ते प्रकृतिजान् गुणानित्यादि श्रुतिस्मृतिभ्यः समष्ट्यात्मपुरुष पदवाच्य जीवस्यापि जगत्कारणत्व श्रवणादित्याशंक्याह भगवान् सूत्रकारः।

**जगद्वाचित्वात्॥१६॥**

कौषीतकिब्राह्मणे वालाक्यजातशत्रु सम्वादे श्रूयते यो वै वालाक एषां पुरुषाणां कर्त्ता यस्य वैतत्कर्म स वै वेदितव्य इति श्रुतौ यस्यै तत्कर्मेत्यत्र यच्छब्देन पुण्य पाप लक्षणवान् पुरुषो न गृह्यते कुतः क्रियत

इति कर्मेति व्युत्पत्या कर्मशब्दस्य जगद्वाचित्वाज्जगत्कारणत्वस्य तु जीवे संभवादत: परमपुरुषस्यैव जगत्कारणत्वं न समष्ट्यात्मक पुरुषस्य परमकारणत्वमिति **कर्तृत्वं करणत्वं च स्वभाव श्चेतनाधृति:। यत्प्रसादादिमे सन्ति न सन्ति तदुपक्षयेति**श्रुत्या जीव कर्तृत्व भगवदधीनत्वात् एतदेव द्रढ़यति भगवान् सूत्रकार:।

**जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥१७॥**

एवमेवैष प्रज्ञात्मा तैरात्मभिर्भुक्तं इति भोक्तृत्व रूप जीव लिङ्गात् अथास्मिन् प्राण एवैकधा भवति इति मुख्य प्राणलिङ्गाच्च न परमात्माजीवमुख्य प्राणानेव जगत्कारणमिति चेत्तस्य परिहरणं प्रथम पादान्ते व्याख्यातं विस्तरतस्तु शंकर भाष्यादिषु द्रष्टव्य: स्वकीयार्थे जैमिनि संवादमाह भगवान् सूत्रकार:।

**अन्यार्थंतु जैमिनि: प्रश्न व्याख्यानाभ्यामपि चैवमेके॥१८॥**

तु शब्द: शंकाव्यवच्छेदार्थ: इह यो वै वालाक इत्यत्र ब्रह्मणो जीव संकीर्तनम् अन्यार्थं ब्रह्मबोधनार्थं जैमिनिराचार्यो मन्यते कस्मात् प्रश्नव्याख्यानाभ्यां प्रश्नस्तावत् सुप्तपुरुषस्य प्रतिबोधने न प्राणादिभिन्ने जीवे बोधिते जीवव्यतिरिक्तविषयो दृश्यते क्वैष एतद्वालाके पुरुषोऽशयिष्ट क्व वै तदभूत कुत एतदागादिति प्रतिवचनमपि यदा सुप्त: स्वप्नं न कंचन पश्यति अथास्मिन् प्राणएवैकधाभवतीत्यादि प्राण शब्दाच्च ब्रह्मणि प्रयुक्त इत्युक्तमेवअपि चैवमेकेच वाजसनेयिनो अस्मिन्नेव वालाकजा शत्रुसम्वादे विज्ञानमय शब्देन जीवममिधाय ततो भिन्नं ब्रह्मामनन्ति य एष विज्ञानमय: पुरुष: क्वैष तदाभूत्कुत एतदागादिति प्रश्ने य एष अन्तर्हृदय आकाशस्तस्मिन् शेत इत्युत्तरे च आकाशशब्दश्च परमात्मनि प्रयुक्तो दहरोऽस्मिन्नन्तरन्तराकाश इत्यत्र तस्मात्परमात्मैवात्र कारणत्वेन वेधतया व्यपदिश्यत इति ननु परमात्मन: परमकारणत्वमुक्तं तन्न सम्यक् प्रतिभाति मैत्रेयीब्राह्मणे आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतौ जीवात्मन: द्रष्टव्यत्वादिनोपदेशात् जीवात्मन: परमकारणत्वं कुतो नेह भगवान् सूत्रकार:।

**वाक्यान्वयात् ॥१९॥**

अत्र वाक्ये द्रष्टव्यत्वादिना परमकारणतया परमात्मैवोपदिष्टो ननु जीवात्मेति कुतः वाक्यान्वयात् पूर्वापरपर्यालोचनेन कृत्स्नस्य वाक्यस्य परमकारणे परमात्मन्येव पर्यवसानात् पूर्वापर वाक्यं तु मैत्रेयी ब्राह्मणे द्रष्टव्यं ननु यया तदक्षरमधिगम्यते यत्तदुद्देश्यमग्राह्यमश्रोत्रमवर्णमचक्षुः श्रोत्रमपाणिपादं तद्रूपभूत योनिं परिपश्यन्ति धीरा इति श्रुत्या परमात्मनो दृष्टत्वाद्यसंभवात् कथं द्रष्टव्यत्वादिनोपदेश इति चेन्न **नाम चिन्तामणिः रामश्चैतन्यः पर विग्रहः। नित्यसिद्धो नित्य युक्तो न भिन्नं नामनामिनः** अतः श्रीरामनामादिना मनोवागादीन्द्रियैः स्फुरति स्वयमेवैति जिह्वादौ श्रवणेमुख इतित्यागस्मृतिपूर्व समाहितमेव ननु भूतयोनित्वं श्रीरामनामाभिन्नान्तर्यामि प्रकाशब्रह्मण उक्तं प्रकाशिनः परमकारणस्य कथंभूतयोनित्वमिति चेदुच्यते **यामिच्छसि महाराज तां तनुं प्रविश स्वकां। वैष्णवी तां महातेजो यद्वाकाशं सनातनमिति** श्रीरामायणात् विम्बाद्युत्तमदेहेषु प्रविष्टो देवताभवत् मर्त्याद्यधमदेहेषु स्थितो भजति देवता इति कैवल्य ब्राह्मणीय श्रुति प्रामाण्याच्च अन्तर्य्यामिनोऽप्यन्तर्य्यामि तया भूतयोनित्वमिति निश्चेतव्यं त्रिमुनिसंमत्यैतदेव द्रढ़यति भगवान् सूत्रकारः।

**प्रतिज्ञासिद्धेर्ल्लिङ्गमाश्मरथ्यः ॥२०॥**

अत्र प्रकरणे इदं नात्मपरमात्मनोर्भिन्नः स्यात्ततः परमात्मविज्ञानेऽपि जीवात्मानो विज्ञायेत इत्येक विज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मजडयोः परात्मचिदचिद्विग्रहादभेदां सेवोपक्रमण-मित्याश्मरथ्य आचार्य्यो मन्यते उत्कृष्टमिष्यते।

**उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥२१॥**

ज्ञानध्यानादिसाधनानुष्ठानात्सम्पन्नस्य देहादिसंघातादुत्कृष्टमिष्यते। सर्वत्र चिदचिद्विग्रहत्वेन ब्रह्मभावनां कुर्वता जीवस्यैवोपपत्तेरिदमेवैक विज्ञानेन सर्वविज्ञानमित्युपक्रमणमित्यौडुलोमिराचार्य्यो मन्यते श्रुति श्चैवंभवति एष

संप्रसादोऽस्मात्शरीरात्समुत्थाय परं ज्योतिरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यत इति ब्रह्मात्मकभगवच्छन्नशरीरेणेत्यर्थः।

**अवस्थितेरिति काशकृत्स्नः॥२२॥**

अस्य श्री रामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मणस्सच्चिदानन्द ब्रह्मात्मक भगवद्दत्तशरीरेणाभेदो जीवात्मनश्च भगवद्दत्तशरीरेणावस्थानादुपपन्नमिदमभेदे-नोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते अतएव एतन्मर्त्यशरीरमतिसृत्य ब्रह्मणैव पश्यति ब्रह्मणैव श्रृणोति इत्यादि श्रुत्या तस्य नित्यस्वस्वरूपत्वेन नित्यत्वं नन्वेवं जीवस्योत्क्रान्तिः कथमिति चेत्तस्य चित्वेनाभेदो नत्वस्यविभुत्वावच्छिन्नव्यक्त्या एतेन यस्मिन् विज्ञाते सर्वमिदम् विज्ञातमिति प्रतिज्ञासिद्धिरिति। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीत्येवं जातीयके ब्रह्मणे परस्यैव ब्रह्मणो जीवान्तर्य्यामि भावेनाऽवस्थानं दर्शितमित्येव शंकराचार्य्याभिप्रायः श्रीरामनामाभिन्नान्तर्यामि ब्रह्मणश्चिदचिद्विग्रहोऽस्ति तत्र पूर्वं जीवतत्वस्य चिद्विग्रहस्य चाभेद उक्तः इदानीं जड़तत्वस्याचिद्विग्रहस्याभेदं प्रतिपादयन्नाह भगवान् सूत्रकारः।

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥२३॥**

प्रकृतिरिच्छारूप मूल प्रकृतिः श्रीरामनामाभिन्नान्तर्य्यामि प्रकाशब्रह्मणो चिद्विग्रह एव कुतः प्रतिज्ञादृष्टान्तानुपरोधात् प्रतिज्ञा तावत् तमादेशमप्राक्ष्योयेनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातम् विज्ञातमिति दृष्टान्तः यथा सौम्यैकेन मृत्युनैत्य न सर्वं मृण्मयमविज्ञातं स्याद्वाचारंभण विकारो नामधेयं मृत्तिकेत्येव सत्यम् यथैकेन लौहमणिना सर्वलोहमयं विज्ञातं स्याद्वाचारंभणविकारो नामधेयं लोहमणिरित्येव सत्यं यथा सौम्येकेन नखनिकृंतनेन सर्वं कार्ष्णायस विज्ञातं स्यात्वाचारंभण विकारो नामधेयं कार्ष्णायसमित्येव सत्यमिति यथा सौम्येकेन कारण भूतेन मृत्युना श्रवणद्वाराज्ञातेन सर्वं मृण्मयम् घटशरावादिकं यत्कार्यजातं तद्विज्ञातं स्यात् घटशरावादिविकारो विविधाकारो वस्तु नामधेयं वाचारंभणमात्रं वाग्व्यवहारमात्रं परमार्थतस्तु कारणभूता मृत्तिकेत्येव सत्यं यथा श्रुतेन श्रीरामनामा श्रवण द्वारा ज्ञातेन सर्वशब्दज्ञातं विज्ञातं स्यात् परमार्थतस्तु

रामनामेत्येव सत्यम् श्रीरामनाम्नः सर्वकारणत्वे प्रमाणं **यथा करण्डे रत्नानि गुप्तान्यज्ञैर्न दृश्यन्ते तद्वन्मन्त्रश्चवेदाश्च रकारे सुव्यवस्थिता** इति पुलहसंहितायाम् पद्‌मपुराणोत्तरखण्डे शिवं प्रत्येकनाम्नासहस्त्रनाम पाठफलं येन भवतीति पार्वतीप्रश्ने।

**राम रामेति रामेति रमे रामे मनोरमे।**
**सहस्त्र नाम तत्तुल्यं रामनाम वरानने॥**

इत्युत्तरदानात्सर्वाणि नामानि यमाविशंतीति माल्लवेय श्रुतेश्च श्री रामनाम्नि सहस्रनामाद्यवकाशेनस्थितमिति यथा सौम्येकेन लौहमणिना सुवर्णपिण्डेन कारणभूतेन मतेन विचारितेन यत् सर्वकार्यभूतं कटककुण्डलादि तद्विज्ञातं स्याद्विकारो विविधाकारो नामधेयं कटकादि वाचारम्भणमात्रं वाग्व्यवहारविषयमात्रं परमार्थतस्तु कारणभूतः सुवर्ण पिण्ड इत्येव सत्यं तथा येन सर्वोपासनकारणभूतेन शास्त्रादिभ्यो विचारपूर्वकमतेन श्री रामोपासनेनाऽमतमन्योपासनं मतं संमतं स्याद्विकारो विविधाकारो नामध्येयं तत्तदुपासनं नामैवाचारं गणवाग्व्यवहार विषयमात्रं परमार्थतस्तु कारणभूतं श्री रामोपासनमित्येव सत्यं तत्र प्रमाणं **यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमुच्यते** ज्योतिभागवते

**कर्मण्यधिकृता ये च देवाः सूर्यादयोऽखिलाः।**
**बिना विष्णुं स्वान्तरस्यं स्वांश्च पूजयतो जनान्॥**

**मामधः पातयन्त्यद्धा संसाराब्धौ पुनः पुनः।**
**देवानन्यान् पूजयद्भिरयं यदि न पूजितः॥**

**देवा विष्णवर्पिता कृत्वा पूजां स्वीयैर्हृतार्पिताम्।**
**किञ्चिद्दत्वा दण्डमपि संसाराब्धौ पुनः पुनः॥**

**तस्मात्कर्मण्यधि कृतान्पूजयन्तः सुरान्द्विजाः।**
**पूजयन्तस्तदंतःस्थं हरिं सिद्धिमवाप्नुयुरिति॥**

Date : 17.12.09/IVth Proof /D : Jobs/Sansthan/Mithila tripathi

वायुपुराणे यथा सौम्येकेन नखनिकृंतनोपलक्षितेन कारणभूतेन कृष्णायसेन कार्यभूतं कार्ष्णायसं सर्व विज्ञातं स्याद्विकारो विविधाकारो नामधेयं खड्गादि वाचारम्भणं वाग्व्यवहारविषयमात्रं परमार्थतस्तु कारणभूतं कार्ष्णायसमित्येव सत्यं तथा येन कारणभूतेन भगवतो चिद्विग्रहेण विज्ञातेन कार्यभूतं सर्वं जगद्विज्ञातं स्याद्विकारो विविधाकारो नामधेयं तत्तन्नाम सरित्समुद्रादिकं वाचारंभण वागालंबनमात्रं परमार्थभूतश्चिदचिद्विग्रह इत्येव सत्यं तत्र प्रमाणं **खं वायुमग्निं सलिलं महीम्च ज्योंतीषि सत्वानि दिशो द्रुमादीन् सरितसमुद्राश्च हरेः शरीरं यत्किंचभूतं प्रणमेदनन्य** इति भागवते इदमत्र तत्वं अर्द्धमात्रात्मकपराख्य रूपरेफाद्वाय्वग्नि संयोगेन पश्यन्ती मध्यमाख्यंच प्राप्य ततो वैखर्य्या श्री रामरूपेण प्रकटी भवति तद्रामनामा भगवतोऽचिद्विग्रह एव तस्मादेव सर्वशब्दं जातं प्रादुर्भवतो भिन्नत्वेन शब्दजातज्ञानं वागालम्बन मात्रं तदात्मकत्वेन ज्ञानमेव सत्यं वेद शास्त्रादिभिः मनस्यनुभूतं बुद्ध्या निश्चितम् यच्छ्रीरामोपासनज्ञानन्तदचिद्विग्रह एव कुतो मनोविषयत्वात् अतः श्रीरामोपासनभिन्नत्वेनान्योपासनं वागालम्बनमात्रं तदात्मकत्वेन तु सत्यमेव किञ्च भगवदिच्छारूपभूतमूलप्रकृत्या चिद्विग्रह-भिन्नत्वेन सरित्समुद्रादिज्ञानं वागालंबनमात्रं श्रीरामेच्छारूपभूतमूल प्रकृत्याच द्विग्रहाभिन्नत्वेन सहित समुद्रादिज्ञानं वागालम्बनमात्रं श्री रामेच्छारूपमूल प्रकृत्याचिद्विग्रहत्वेन ज्ञानं सत्यमेवेति ननु श्री रामनामोपासनेच्छानां

**रामस्य नामरूपं च लीलाधामपरात्परम्।**
**एतच्चतुष्टयं नित्यं सच्चिदानन्द विग्रहम्॥**

इति सच्चिदानन्द विग्रहत्वात् कथमचिद्विग्रहत्वमितिचेदुच्यते वाङ्मनसगोचराणां नामोपासनेच्छामचिद्विग्रहत्वमेव कुतः मनसानुभूयमानस्य चित्वा संभवात्तद्वाक्यं तु एतन्नामादितात्पर्यगम्यवाङ्मनोगोचरातीतसाकेत निवासि श्री रामस्य नामादिसूचकमिति तथोपासनायाश्च सूचकमिति तदस्तु प्रकृतिवाच्याऽचिद्विग्रहेच्छारूपाः श्री रामनाम्नाऽभेदश्चेत्तर्हि प्रकाश ब्रह्मणोऽपि जडत्वापत्तिः तदभेदादिति चेदुच्यते।

**यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः।**
**तथैव राम बीजस्थंजगदेतच्चराचरमिति** रामतापनीयश्रुतेः।

**रकाराज्जायते ब्रह्मा रकाराज्जायते हरिः।**
**रकाराज्जायते शंभुः रकारात्सर्वशक्तयः।।**

**आदावन्ते तथा मध्ये रकारे सुप्रतिष्ठितं।**
**विश्वंचराचरं सर्वं अवकाशेन नित्यशः।।**

इति स्मृतेश्च विश्वार्थकत्वेन श्री रामनाम्नो चिद्रूपत्वं परमार्थतस्तु चिद्रूपमेव।

**रमन्ते योगिनो यस्मिन् सत्यानन्दे चिदात्मनि।**
**इति श्री रामपदेनासौ परं ब्रह्माभिधीयतेति।।**

श्रुतेः श्री रामनाम्ना ब्रह्मणोऽभेदात् चिद्चिद्विग्रहत्वमपीत्यतः विश्वार्थकत्वेनैव जडत्वं श्री रामनाम्नः शब्द विग्रहत्वादचिद्रूपत्व-मुक्तंवस्तुतश्चिद्रूपत्वमेव अन्यथा सर्वं खल्विदं ब्रह्म ब्रह्मैवेदं सर्वमितिश्रुतेः **न चान्तर्न बहिर्यस्य न पूर्वं नापिचापरं। पूर्वापरंबहिश्चान्तर्जगतो यो जगच्च य** इति स्मृतेश्च ब्रह्मणस्सर्वरूपत्वेन ब्रह्मणोपिजडत्वापत्तिः एते ब्रह्मणोऽभिन्न निमित्तोपादानकारणत्वं सिद्धं इच्छारूपप्रकृतेर्ब्रह्मणोऽचिद्विग्रहत्वं प्रतिपादयन् तेन प्रकृतिशब्देनैन ब्रह्माभिन्न निमित्तोपादानकारणमिति द्रढ़यति भगवान्सूत्रकारः।

**अभिध्योपदेशाच्च।।२४।।**

अभिध्योपदेशश्च परमात्मनः कर्तृत्व प्रकृतित्वमेवगमयतिसोऽकामयत बहु स्यां प्रजायेयेति तदैक्षत बहुस्यां प्रजायेयेति च तत्राभिध्यानपूर्विकायाः स्वातंत्र्यप्रवृत्तेः निमित्तकारणतेतिगम्यते बहुस्यामिति चिदचिद्विग्रहान्तर्यामितया बहुभवननिध्यानस्योपादानकारणत्वमित्यपि गम्यते जडरूपाया इच्छाया भगवद्चिद्विग्रहत्वेऽपि चिद्रूपस्य जीवस्य कथंभगवद्विग्रहत्वमित्याशंक्याह-भगवान्सूत्रकारः।।

**साक्षात्चोभयाम्नानात्॥२५॥**

य आत्मनि तिष्ठन् यस्यात्मा शरीरं यो विज्ञाने तिष्ठन् यस्य विज्ञानं शरीरं यः पृथिव्यां तिष्ठन् यं पृथिवी तव यस्य पृथ्वीशरीरमित्यादि श्रुत्या जीवजड़योरुभयोरप्यन्तर्य्यामितया साक्षाद्भगवद्विग्रहत्वे आम्नायात् जीवो ब्रह्मणश्चिद्विग्रहोभवितुमर्हति अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तस्माद्ब्रह्मनामरूपमन्नंनिमित्तोपादानकारणमपीति तदेव द्रढ़यति भगवान् सूत्रकारः।

**आत्मकृतेः परिणामात्॥ २६॥**

तदात्मानं स्वयमकुरुतेतिश्रुति आत्मनः कर्मत्व कर्तृत्वाभ्यामभिन्ननिमित्तोपादानकारणत्वं बोधयति कुतः आत्मकृतेः आत्मसंबन्धिकृति दर्शनात् आत्मानमिति पदेन कर्मत्वेनोपादानत्वं स्वयमकुरुतेति कर्तृत्वेदं दर्शयति नन्वेकस्यैवात्मनः कथं कर्त्तृत्वं कर्मत्वमिति चेच्छ्रीरामनामास्थित सूक्ष्मचिदचिद्विग्रहस्य स्थूलरूपेण परिणामादित्यर्थः।

**योनिश्च हि गीयते॥ २७॥**

कर्त्तारमीशं पुरुषं ब्रह्मयोनिमिति यः भूतयोनिं पश्यन्ति धीरा इत्यादि श्रुतिषु योनिमिति गीयते स च योनि शब्द आकरवाची योनिः स्यादाकरे मे मतिः विश्वकोशात्तथा च श्री रामनामाभिन्नान्तर्यामिब्रह्मणश्चिद्विग्रहः समष्टिजीवो भूतानां व्यक्तिजीवानां योनिः आकरः **जीवाद्भवन्तिभूतानि जीवे तिष्ठन्त्यचंचलाः। जीवं तु लयमिच्छन्तिनजीवात्कारणं परमिति** श्रुतेः तथाभूतानां महदादि जडानां ब्रह्मणे चिद्विग्रहो योनिराकारो यस्मिन् तमिति।

**प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति।**
**प्रधाने लयमभ्येति न ह्यन्यत्कारणं परमिति॥**

श्रुतेः एवं ब्रह्मयोनिरित्यत्रापि ब्रह्मशब्देन चिद्विग्रहो जीव उच्यते स योनिराकारो यस्मिन् तमित्यर्थः।

**जीव आत्मा मनश्चैव देहश्च प्रकृतिस्तथा।**
**घनीभूतं हरेस्तेजो ब्रह्मेति परिकथ्यते॥**

इत्यभिधानान्मम योनिर्महद्ब्रह्म तस्मिन् गर्भंदधाम्यहमिति गीतावाक्याच्च चिदचित: कारणं च अचिच्चित: कारणं न अन्यथा न जीवात्कारणं परमिति प्रधाने लयमभ्येति नहि अन्यत्कारणं मतमितिश्रुती-व्याकुप्येताम् हि यत: यस्य चिदचिद्विग्रहो योनित्वेन गीयते अत: चिदचिद्विग्रहत्वेनैव सर्वयोनित्वेन श्री रामानामाभिन्नान्तर्यामि प्रकाशब्रह्मणोऽभिन्न निमित्तोपादानकारणत्वमिति सिद्धम् अध्यायार्थमुपसंहरन्नाह भगवान्सूत्रकार:।

**एतेन सर्वे व्याख्याता:॥२८॥**

एतेन नित्यचिदचिद्विग्रहत्वेन श्री रामानामाभिन्नान्तर्यामि प्रकाश ब्रह्मण: सर्वकारणत्वेन रामाज्ञानादेव स्वयमुत्पत्यादिमत्वेन चिच्चित: कारणमचिदचित: कारणत्वप्रतिपादका: सर्वशब्दा: एकत्व द्वित्वादि प्रतिपादकाश्च शब्दा: व्याख्याता व्याख्याता निर्णीता एवेत्यर्थ: निश्चयार्थे वीप्सा अवधारणार्थ सर्वस्याप्युक्तस्याध्यायमूलत: द्विरुक्तं कुरुते प्राज्ञा अध्यायान्ते विनिर्णय इति वाराहसंहितावाक्यात् तस्मात्तन्मते सर्वसमन्वयेतिसिद्धं इति श्रीमद्भगवदवतार वेदार्थनिर्णायक श्री मद्वेदवेदान्ताचार्य श्री मद्वेदव्यासकृत वेदान्त सूत्रस्य सिद्धि श्रीमहाराजाधिराज श्रीमहाराजश्रीराजाबहादुर श्री सीतारामचन्द्रकृपापात्राधिकारि विश्वनाथसिंहदेवजू कृते श्री राधावल्लभीयमत प्रकाशकभाष्ये प्रथमाध्यायस्य चतुर्थ: पाद:॥ २९॥